❀ श्रीसीतारामाभ्यां नमः ❀

# श्रीमद्भागवते श्रीहनुमदुपदेशः



श्रीशुक उवाच—किम्पुरुषे वर्षे भगवन्तमादिपुरुषं लक्ष्मणाग्रजं सीताभिरामं रामं तच्चरणसन्निकर्षाभिरतः परमभागवतो हनुमान् सह किम्पुरुषैरबिरतभक्ति-रूपास्ते ॥१॥

अन्वयः—किम्पुरुषे वर्षे तच्चरण सन्निकर्षाभिरतः परम-भागवतः हनुमान् किम्पुरुषैः सह अविरत भक्तिः भगवन्तं आदि-पुरुषं लक्ष्मणाग्रजं सीताभिरामं रामं उपास्ते ॥१॥

**व्याख्यातुर्मङ्गलाचरणम्—**

ॐ नमः परमहंसास्वादित चरणकमलचिन्मकरन्दाय
भक्तजन मानसनिवासाय श्रीरामचन्द्राय ॥१॥

साम्राज्यमर्पयति भक्तिलवेप्युदग्रं
प्रेम्णि प्रदर्शयति पादसरोजशोभाम् ।
विघ्नान्निवारयति या भजतां समन्तात्
सा जानकी विजयते कुलदैवतन्नः ॥२॥

साकेते सरयूतटे मणिभुवि श्री जानकीवल्लभम् ।
कुञ्जे पुष्पमये प्रमोदविपिने नित्यं सखीभिर्युतम्
वाक्यैर्हास्ययुतैः कटाक्षमधुरैराह्लादयन्तं प्रियाम् ।
क्रीडन्तं मधुरं कदा रघुवरं द्रक्ष्यामहं चक्षुषा ॥३॥

सीतानाथसमारम्भां रामानन्दार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥४॥
वाञ्छाकल्पतरुभ्यश्च कृपासिन्धुभ्य एव च ।
पतितानां पावनेभ्यो वैष्णवेभ्यो नमो नमः ॥५॥

श्रीसीतारामचरणस्मरणानन्दसिद्धये ।
सीतारामशरणेन सदुच्छिष्टं सुरस्यते ।

**व्याख्या**—एवमिलावृतादिषु वर्षेषु सप्तसूपास्यादिकमुक्तम्। अथेदानीं किम्पुरुषे वर्षे उपास्य स्वरूपं जप्यं मन्त्रं चाह- किम्पुरुष इति-

**'भगवन्तम्'**—'भग अस्यास्तीति भगवान् उक्तं महर्षि पराशरेण-

'ज्ञानशक्ति बलैश्वर्य वीर्य तेजांस्यशेषतः ।
भगवच्छब्द वाच्यानि विनाहेयैर्गुणादिभिः ॥'

उत्पत्तिं प्रलयञ्चैव भूतानां गतिमगतिम् ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥
ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरिणा ॥

इत्यादि भगवच्छब्द निरूपणपराणि स्मृतिवाक्यान्यप्यत्रानु-सन्धेयानि । एतेनाखिलहेयप्रत्यनीकत्व षडैश्वर्यसम्पन्नत्वम् भगवत्वमुक्तम् ।

**आदिपुरुषम्**— जगत्कारणभूतं परमपुरुषमुच्यते । 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयं' इति श्रुतिवाक्ये सच्छब्दाभिहितस्य ब्रह्मणः कारणत्वं प्रदर्शितम्। हे सौम्य ! इदं चेतनाचेतनात्मकं सर्वं जगत् सृष्टेः पूर्वं सदेव आसीत् । सूक्ष्मचिदचिद्विशिष्टं नामरूप विभागानर्हं सद्रूपम-त्रोक्तं भवति । 'यतो वा इमानि भूतानि जायन्ते' इत्यनया

श्रुत्यापि जगत्कारणस्यैव परब्रह्मण उपासनत्वमुक्तम्। उपबृंहितं वेदावतारे महर्षि वाल्मीकिना– त्वं त्रयाणां हि लोकानामादि-कर्ता स्वयं प्रभुः। सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः।'

**'लक्ष्मणाग्रजम्'**— 'लक्ष्मणो लक्ष्मिवर्धन' 'लक्ष्मणो लक्ष्मिसम्पन्नः' इत्यादि रामायणोक्त रीत्या कैङ्कर्यलक्ष्मीसम्पन्नो भविष्यतीति ज्ञात्वैव 'लक्ष्मण' इति नाम महर्षि श्रीवशिष्ठेन कृतम्। तस्य सर्वलक्षणसम्पन्नस्य अग्रजस्य श्रीरामस्य निखिल कल्याणगुणगणाश्रयत्वं युक्तमेव। किञ्च--जीवाचार्यस्य श्री-लक्ष्मणस्य घटकत्वमन्तरा श्रीरामस्यप्राप्तिरशक्येति। यद्यपि पूर्वाचार्यैः मुख्यरुपेण श्रीसीताया एव पुरुषकारत्वं श्रीरामायणे सर्वत्र वर्णितं तथापि श्रीलक्ष्मणस्यापि पुरुषकारत्वं सुसिद्ध्यति। 'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महदिति वाल्मीकिवचनं श्रीसीतायाः पुरुषकारवैभवख्यापनपरमिति सुविदितचरमेव। तथापि श्रीलक्ष्मणस्यापि श्रीरामप्रापकत्वरुपाचार्यस्वरुपत्वं रामायणे सर्वत्र दृश्यते। श्रीविभीषणः सलक्ष्मणं श्रीराममाजगा-मेत्यनेन महर्षिणा श्रीलक्ष्मणस्य सान्निध्ये विभीषणागमनं, तच्छरणागति प्रसङ्गे सुनिपुणतरं प्रतिपादितम्।

'इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः।
आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः॥' (६-१७-१)

यत्र सलक्ष्मणः श्रीरामस्तत्स्थलमाजगाम–विभीषणः, केवलं श्रीरामं नाजगाम किन्तु सलक्ष्मणमाजगाम एतेन श्रीलक्ष्मण सहितस्यैव श्रीसीतारामोपासना कर्तव्येति सिद्धान्तः प्रदर्शितः।

श्रीलक्ष्मणः श्रीरामस्य दक्षिणबाहुर्वहिःप्राणस्वरूपत्वेन विराजते, सर्वदा श्रीरामसन्निधौ। उक्तं महर्षिणा—

बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः।
रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः॥
सर्वप्रियकरस्तस्य रामस्यापि शरीरतः।
लक्ष्मणो लक्ष्मिसम्पन्नो वहिः प्राण इवापरः॥
न च तेन विना निद्रां लभते पुरुषोत्तमः।
मृष्टमन्नमुपानीतमश्नाति नहि तं विना॥
यदा हि हयमारूढो मृगयां याति राघवः।
तदैनं पृष्ठतोऽभ्येति सधनुः परिपालयन्॥'

( १-१८-२८, ३२ )

इत्यादि। अत्र बाल्यमारभ्य श्रीलक्ष्मणः श्रीराम सेवापरायणोऽभूदिति ध्वनितम्। सुतरां स्निग्धः सुस्निग्धः, अंकुरात्प्रभृति परिमलेनैवोत्पन्नस्तुलसीकाण्ड इव जन्मप्रभृति निरवधिक भक्तिसम्पन्न इति पूर्वाचार्याः।

श्रीरामपर्यङ्केण स्वपर्यङ्कायोजनं विना बाल्येऽपि न निद्रातीत्यर्थः। अनेन स्वरूपप्रयुक्तं दास्यं श्रीलक्ष्मणे प्रतिपादितम्। 'गुणैर्दास्यमुपागतः' इत्यनेन गुणप्रयुक्तं दास्यं किष्किन्धाकाण्डे वर्णितम्। 'रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः' इत्यनेन श्रीलक्ष्मणस्य श्रीरामबाहुत्वात्तं विना श्रीरामः कथं भुञ्जीत। प्राणरूपं श्रीलक्ष्मणं विना कथं निद्रां लभेदिति। "क्षणेऽपि ते यद्विरहोऽति दुःसहः' इति यामुनाचार्योक्त्या श्रीरामस्यापि श्रीलक्ष्मणविश्लेषासहत्वं सुस्पष्टमेव। पुरुषोत्तमस्येदमेव पुरुषोत्तमत्वम्।'न च सीता त्वया हीना न चाहमपि राघव। मूहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ॥' इति श्रीलक्ष्मणोक्त्या तस्यापि श्रीरामविश्लेषासहत्वमत्र विभावनीयम्।

सद्गुनुः परिपालयनित्यनेन स्वपालकस्य श्रीरामस्यापि पालनम्,
अहो! तस्य काचिदनिर्वचनीया प्रीतिसम्पत्तिः। अत्र सिद्धसाधन
निष्ठैर्भक्तैः श्रीलक्ष्मणवत् कैङ्कर्यपरायणैर्भवितव्यमित्यपि प्रत्य-
पादि। 'भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते। अहं सर्वं करि-
ष्यामि जाग्रतः स्वपतश्च ते' इति श्रीलक्ष्मणेन प्रतिज्ञातम्।
अनेन सर्वदेश सर्वकाल सर्वावस्थोचित सर्वविध कैङ्कर्यलाभः
जीवमात्रस्य चरमपुरुषार्थ इत्याहुः। श्रीलक्ष्मणाग्रज विशेषणस्येद-
मेव तात्पर्यम्।

**"सीताभिरामम्"**—सीतयाभिरामः सुन्दरस्तम्, श्रीसीताया
अभिराममनुरूपमिति वा। सीतामभिरामयतीति सीताभिराम-
स्तम्। सीतायाः अभिरामं पतिं श्रीरामचन्द्रमिति केचित्।
सीतालाङ्गल पद्धतिरित्युक्त्या तज्जन्यत्वाद् तद्व्यपदेशः। अने-
नायोनिजात्वोक्तेर्जनकनन्दिनी रूपावतारोचित मधुरविग्रह स्वी-
कारेऽपि दिव्यलोकवासकालिकसौन्दर्यान्यूनतोक्ता। 'स च सर्व-
गुणोपेतः कौसल्यानन्दवर्धनः' इति मूलरामायणे यथा रामस्य
वेदान्तोदितनिखिल कल्याणगुणगणसम्पन्नत्वमुक्तं तथैव 'सर्व-
लक्षणसम्पन्ना नारीणामुत्तमा वधूः' इत्यनेन श्रीसीताया अपि
निखिल कल्याणगुणगणसम्पन्नत्वञ्चोक्तम्। यथा रामः पुरुषो-
त्तमस्तथेयं श्रीरामानुरूपा नार्युत्तमेत्यर्थः। सिनोतीति स्वगुणैः
राममिति सीता, श्रीरामगुणैः स्वयं सीयते इति वा सीता।

सिनोत्यतिगुणैः कान्तं सीयते तद्गुणैस्तु या।
वात्सल्यादि गुणैः पूर्णां तां सीतां प्रणतोऽस्म्यहम्॥

उक्तं महर्षिणा—

अस्या देव्या यथा रूपमङ्गप्रत्यङ्गसौष्ठवम् ।
रामस्य च यथारूपं तस्येयमसितेक्षणा ॥
तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् ।
राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥

सीतामभिरामयतीति सीताभिरामस्तम् ।

अशोकवनिका विहार प्रसङ्गे महर्षिणा वर्णितम्—

मनोभिरामा रामास्ता रामो रमयतां वरः ।
रमयामास धर्मात्मा नित्यं परमभूषितः ॥
स तया सीतया सार्धमासीनो विरराज ह ।
अरून्धत्या सहासीनो वसिष्ठ इव तेजसा ॥
एवं रामो मुदायुक्तः सीतां सुरसुतोपमाम् ।
रमयामास वैदेहीमहन्यहनि देववत् ॥
तथा तयोर्विहरतो सीताराघवयोश्चिरम् ।
अत्यक्रामच्छुभः कालः शिशिरो भोगदस्सदा ॥ इत्यादि ।

सीताया अभिरामं पतिं श्रीरामचन्द्रमिति केचिद् । सीता-लाङ्गलपद्धतिरित्युक्त्या तज्जन्यत्वात्तद्व्यपदेशः । श्रीसीतोप-निषदि श्रीसीताशब्दस्य व्युत्पत्तिरित्थं वर्णिता— 'सकारः सत्यममृतं प्राप्तिः सोमश्च कीर्त्यते । तकारस्तार लक्ष्म्या च वैराजः प्रस्तरः स्मृतः । ईकाररूपिणी सोमामृतावयव दिव्यालंकार स्रङ् मौक्तिकाद्याभरणालङ्कृता महामायाऽव्यक्तरूपिणी व्यक्ता भवति । प्रथमा शब्द ब्रह्ममयी स्वाध्यायकाले प्रसन्ना उद्भावन-करी सात्मिका द्वितीया भूतले हलाग्रे समुत्पन्ना । तृतीया ईकार-रूपिणी अव्यक्तस्वरूपा भवतीति सीतेत्युदाहरन्ति ।

सीतया लाङ्गलपद्धत्या निष्क्रान्ता निर्वृत्ता वा इति सीता। एव सीताशब्दस्य नाना व्युत्पत्तयः श्रूयन्ते। अनुसूयया पृष्टा श्रीसीता स्वोत्पत्तिमित्थं वर्णितवती—

मिथिलाधिपतिर्वीरो जनको नाम धर्मवित्।
क्षात्रधर्मे ह्यभिरतो न्यायतः शास्ति मेदनीम्॥
तस्य लाङ्गलहस्तस्य कर्षतः क्षेत्रमण्डलम्।
अहं किलोत्थिता भित्त्वा जगतीं नृपतेः सुता॥
स मां दृष्ट्वा नरपतिर्मुष्टिविक्षेपतत्परः।
पांसुकुण्ठित सर्वाङ्गीं जनको विस्मितोऽभवत्॥
अनपत्येन च स्नेहादङ्कमारोप्य च स्वयम्।
ममेयं तनयेत्युक्त्वा स्नेहो मयि निपातितः॥
अन्तरिक्षे च वागुक्ता प्रतिमाऽमानुषी किल।
एवमेतन्नरपते धर्मेण तनया तव॥
ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलाधिपः।
अवाप्तो विपुलामृद्धिं मामवाप्य नराधिपः॥
दत्ता चास्मीष्टवद्देव्यै ज्येष्ठायै पुण्यकर्मणा।
तया सम्भाविता चास्मि स्निग्धया मातृसौहृदात्॥

(२-११८-२७ से ३३)

सीता लाङ्गलपद्धतिरिति कोषः। उपर्युक्त श्लोकैः श्रीसीता स्वोत्पत्तिमयोनिजात्वञ्च स्वमुखेनैव वर्णितवती। भुवनेश्वर संहितायां वैशाखशुक्लनवम्यां तस्या अवतारो जात इति वर्णितम्।

लाङ्गलस्य तु सीतायाः कृषतः क्षेत्रमुत्तमम् ।
वैशाखे धवले नन्दे तिथौ जाता जगन्मयी ॥

पाद्मेऽपि श्रीसीतानाम करणस्य हेतुः प्रदर्शितः—

अथ लोकेश्वरी लक्ष्मीजनकस्य पुरे स्वतः ।
शुभक्षेत्रे हलोत्खाते तारे चोत्तरफाल्गुने ॥
अयोनिजा पद्मकरा बालार्कशतसंनिभा ।
सीतामुखे समुत्पन्ना बालभावेन सुन्दरी ॥
सीतामुखोद्भवात्सीता इत्यस्यै नाम चाकरोत् ॥

वस्तुतस्तु श्रीरामाह्लादिन्याः तस्याः सर्वेश्वर्याः अनादि नाम सीतेति ऋग्वेदे सुस्पष्टम् । 'अर्वाची सुभगे ! भव सीते ! वन्दामहे त्वा । यथा नः सुभगाऽससि यथा नः सुफला असिसि ॥
( ऋ० ४-५७-६ )

'इन्द्रः सीतां निगृह्णातु' ( ऋ० ४-५७-७ )

अथर्वणेऽपि सीतावतारकथोपलभ्यते—

'घृतेन सीता मधुना समक्ता' । ( ३-१७-६ )

इत्थं श्रुतिस्मृतिपुराणकोषादिषु सर्वत्र सीतावतारकथा-प्रसङ्गः सविस्तरमुपलभ्यते ।

'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' 'वेदःप्राचेतसादासीत् साक्षाद्रामायणात्मना' इत्यादि श्रुति-स्मृत्यादीनां ब्रह्मण्येव तात्पर्यमिति सुस्पष्टम् । सीताविशिष्टस्यैव श्रीरामस्य ब्रह्मस्वरूपत्वमङ्गीकृतम् प्रमाणपरतन्त्रैः शास्त्रविद्भिः ।

इत्यादि । श्रीरामतापनीयोपनिषदि—

'हेमाभया द्विभुजया सर्वालंकारया चिता ।
श्लिष्टः कमलधारिण्या पुष्टः कोसलजात्मजः ॥'

इत्यस्मिन् मन्त्रे चिता चिद्रूपयेति विशेषणेन श्रीजानकी विग्रहस्यापि चिदात्मकत्वमुक्तं भवति । अन्यथा स्वरूपेण जीवानामपि चिद्रूपत्वात् जगदीश्वरी जानकी विषयक चितेत्युक्ते-र्वैयर्थ्यापत्तेः । सुन्दरीतन्त्रेऽपि प्रथमपटलस्यादौ श्रीजानक्या चिदात्मकत्वमुक्तम् । एकान्ते शोभनां सीतां दिव्यरूपां मनोर-माम् । विश्वाद्यां विश्वजननीं वर्णरूपां चिदात्मिकाम् ॥ केवला-नुभवानन्दां तेजः पुंजतनूरुहाम् । तडित्पुंजकलाभासां कोटीन्दु-वदनच्छविम् ।' इति । अनेनेदं चिदात्मकं द्विभुजमेव श्रीजानक्या परात्पररूपमित्यवगम्यते । अगस्त्यसंहितोक्त श्रीजानकीस्तव-राजेऽपि— 'अस्फुरत्कृपया तत्र रूपं तस्याः परात्परमित्यस्या-नन्तरं 'बाहू मृणाल मदखण्डनपण्डितौ ते भीताभयप्रद वदान्य-तमौ जनानामिति' तस्यैव परात्पररूपस्य द्विभुजत्वोक्तेः । कमल-धारिण्या सीतया श्लिष्टः वामे भागे आलिङ्गितः । पुष्ट इति तदालिङ्गनादेवानन्दतुन्दिल इत्यर्थः । श्लिष्टः इत्यनेन श्रीसीता-रामयोः परस्परं प्रेमविह्वलत्वेन परम रसिकत्वं सूचितम् ।

केचित्तु श्रीजानक्या प्रधानरूपत्वं मन्यन्ते, तदप्यनेन निरस्तं भवति । सीताया चिद्रूपत्वात् प्रधानस्याचिद्रूपत्वाच्चेति व्याचख्युः तापनीयभाष्ये श्रीहरिदासस्वामिनः । अनेकेषु स्थलेषु प्रकृतिरविद्यामायादिशब्दैः श्रीसीतायाः प्रतिपादनं दृष्ट्वा अनेके विद्वांसः श्रीसीतां मायातत्त्वं मन्यन्ते । नूनं ते भ्रान्ता एव । नहि

प्रकृत्यविद्यादिशब्देन श्रीसीतातत्वं मायातत्वं श्रुतिस्मृत्यादि-प्रमाणबलेन प्रतिपादयितुं शक्यते। मंत्रब्राह्मणात्मके वेदे तदुप-बृंहणभूतेतिहासपुराणादिषु सर्वत्र श्रीसीतायाः, ब्रह्मस्वरूपेणैव प्रतिपादनं दृश्यते। श्रीरामतापनीयाश्रुतिस्तां चिद्रूपिणीं प्रति-पादयतीति पूर्वमेवोक्तम्। ब्रह्मसूत्रस्य प्रकृत्यधिकरणे प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रे प्रकृतिशब्देन उपादानकारण भूतः परमात्मोच्यते। 'वासुदेव पराप्रकृतिरित्याद्यनेकेषु स्थलेषु प्रकृतिप्रधानादिशब्दैः परमात्मनः प्रतिपादनं दृश्यते। 'गीतायान्तु-जीवात्मानमपि परां प्रकृतिमाहुः— 'अपरेयमितस्त्वन्यां प्रकृतिं विध्दि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगदिति। यथा ब्रह्मसूत्रगीतादिषु प्रकृति प्रधानादि शब्दैः प्रतिपादितस्य परमात्मनः ब्रह्मस्वरूपत्वे न काचिदनुपपत्तिस्तथैव प्रकृतिमायादि शब्दैः यत्रतत्र प्रतिपादित श्रीसीताया ब्रह्मस्वरूपत्वे न काचिद-नुपपत्तिरिति सुधीभिर्विभावनीयम्।

विचित्रसर्गकतृत्वस्वरूपतिरोधानकर्तृत्वादि मायाया स्व-रूपम्। किं जगज्जननी श्रीजानकी विचित्रसर्गकरी स्वरूपतिरो-धानकरी च वर्तते? वस्तुतस्तु श्रीजानकी कृपयैव स्वरूपतिरो-धायिकाया अविद्यायाः निवृत्तिर्जायते। लोहितकृष्णशुक्ला त्रिगुणात्मिका अविद्या सदा जीवात्मानं बध्नाति। श्रीजानकी तन्मोचयति। श्रीकरपात्रिस्वामिभिरूच्यते— यत् ये श्रियं मायां कथयन्ति पश्यन्ति च, ते मायया बद्धाः भवन्ति, ये श्रियमाह्ला-दिनी शक्तिं मन्यन्ते पश्यन्ति च तेभ्यः श्रीजानकी भक्तिं ददाति तान् मोचयति च।

'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्।
क्षरं प्रधानममृताक्षरं हरः। क्षरात्मानावीशते देव एकः।"

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः।' इत्यादि श्रुतिस्मृतिषु चिदचिदीश्वर तत्त्वत्रयस्यैव प्रतिपादनं दृश्यते। तत्र- अचित्तत्व स्वरूपतः परिणमते। चित्तत्वं धर्मभूत ज्ञानतः परिणमते। ईश्वरस्य न ज्ञाने परिणामो न स्वरूपे परिणामः। श्रीसीतातत्वं अचित्तत्वं भवितुं नार्हति— अचितः जडत्वात् सीतायाः चिद्रूपत्वात्। श्रीसीतातत्त्व जीवतत्त्वमपि भवितुं नार्हति जीवात्मनः अचित्संसृष्टदशायामज्ञत्वात् मायाधीनत्वाच्च। श्रीसीतायाः अवतारदशायामपि सर्वज्ञत्वात् दिव्यमंगलमय विग्रहयोगाच्च। अवतारो नाम-अजहत्स्वभावस्यैव रूपान्तर परिग्रहः इति सम्प्रदायः।' 'ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।' इति श्रीसूक्तवचनेन श्रीजानकी मायाजीवादीनामीश्वरीति सुस्पष्टं प्रतिपाद्यते। अतः श्रीसीतातत्त्व न मायातत्त्वं न जीवतत्त्वं किन्तु ब्रह्मतत्त्वमेव। माययापहृतज्ञानाः भगवच्चरणसरोरुहभक्तिहीना एव चिद्रूपिणीम् श्रीसीतामपि मायामुदाहरन्ति।

सर्वत्र वेदशास्त्रादिषु जगज्जन्मादिकारणत्वमेव ब्रह्मलक्षणम् - 'यतो वा इमानि भूतानि जायन्ते' 'जन्माद्यस्य यतः' इत्यादि श्रुतिस्मृतिभ्यः ब्रह्मणः जगत्कारणत्वं सम्यगुपपादितम्।

श्रीसीतायामिदं लक्षणं पूर्णरूपेण पर्यवस्यति। श्रीसीताविशिष्टस्यैव श्रीरामस्य जगत्कारणत्वं श्रीरामतापनीया श्रुतिराचष्टे--'श्रीसीतारामौ तन्मयावत्र पूज्यौ जातान्याभ्यां भुवनानि द्विसप्त। स्थितानि च प्रहृतान्येव। अत्र अस्मिन् बीजे तन्मयौ रेफमयौ–रेफतादात्म्यापन्नौ सीतारामौ पूज्यौ ज्ञेयौ, पूजतिरत्र ज्ञानार्थः नत्वर्चनार्थः। आभ्यां सीतारामाभ्यां द्विसप्तभुवनानि अधस्तनानि सप्त--उपरितनानि सप्तेति चतुर्दश भुवनानि जातानि तथा स्थितानि पालितानि तथाभ्यां प्रहृतानि विनाशितानि। अनेन श्रीसीतारामयो 'जन्माद्यस्य यतः' इति सूत्रविषयत्वमुक्तं भवति। भगवत्स्वरूपनिरूपककोटावन्तर्भावात् भगवतः पृथक्कृत्य श्रियं नाभिधत्ते श्रुतिः। यद्यपि श्रीसूक्त, श्रद्धासूक्त, मेधासूक्त, अदिति सूक्त, वाक्सूक्तादिषु श्रियः अनितरसाधारणं स्वरूपमुपलभ्यते। श्रीरामतापनीयसीतोपनिषदादिषु तदुपबृंहणभूतेतिहासपुराणादिषु च श्रीसीतायाः चिद्रूपत्वेन वर्णनं दृश्यते। तथापि ब्रह्मसूत्रादिषु कतिचन वेदान्तग्रन्थेषु श्रीतत्त्वस्य भगवतः पृथक्कृत्य वर्णनं नोपलभ्यते। तत्र तत्र श्रियः भगवत्स्वरूपकोटावेवान्तर्भावात्। श्रीभट्टार्यैरुक्तम् श्रीमहिमावबोधविषये लोकाः बधिराः सन्ति "नेतुर्नित्यसहायिनी जननि नस्त्रातुंत्वमत्रागता, लोके त्वन्महिमावबोध बधिरे प्राप्ता विमर्दं बहु। क्लिष्टं ग्रावसु मालती मृदुपदं विश्लिष्य वासो वने,जातो धिक्करुणां धिगस्तु युवयोः स्वातन्त्र्यमत्यङ्कुशम्। तत्त्वज्ञाः सीतापतित्वमेवेश्वर लक्षणं जानन्ति।

यथा प्राहुर्भट्टार्याः –

'यद्भ्रूभङ्गाः प्रमाणं स्थिरचररचनातारतम्ये मुरारेः,
वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति।'

मुरद्विषः स्थावरजंगमसृष्टिनीचोच्चभावे श्रीभ्रूभङ्गाः प्रमाणमस्ति। स्थावरसृष्टौ नीचोच्चभावः—कल्पवृक्षचन्दनरसालाश्वत्थनारिकेलाद्यपेक्षया बबूरार्ककण्टकिद्रुमाणां नीचभावः। तत्प्रतियोगिनामुक्तानां कल्पवृक्षादिनामुच्चभावः। चरसृष्टौ नीचोच्चभावस्तु देवापेक्षया मनुष्याणां, मनुष्येषु च ब्राह्मणक्षत्रियवैश्यशूद्रादीनां क्रमशः निकृष्टभावः। तदपेक्षया तिरश्चां हंसगरुड़शुकसारिका मयूरकोकिलाद्यपेक्षया गृध्रकाकोलूकादीनां नीचभावः बोद्धव्यः। तत्र लक्ष्म्याः भ्रूविक्षेपाः प्रमाणं नियामकाः। श्रीभ्रूभङ्गतारतम्यं दृष्ट्वा हरिः स्थावरजङ्गमात्मकं जगत् तरतमभावेन सृजतीति भावः। श्रीभ्रूभङ्गतारतम्ये च जीवानां तत्कर्मतारतम्यं हेतुरिति श्रियो न वैषम्यनैर्घण्यप्रसङ्गः।

ब्रह्मसूत्रेऽपि 'वैषम्यनैर्घण्ये न स्याताम् सापेक्षत्वात्' इति सूत्रे भगवान् बादरायणः निरूपयामास, यत् कर्मानुसृत्यैव भगवान् जीवात्मभ्यः समविषम फलं ददाति, अतः भगवान् वैषम्यनैर्घण्यरहितः। तथैवात्र श्रीविषयेऽपि जीवकर्मानुगुणमेव तरतमफलदानमवगन्तव्यम्।

भ्रूभङ्गाः प्रमाणमिति कथनेन धातुर्जगत्सृष्टौ यथा वेदाः प्रमाणं तथा भगवतोऽपि स्थिरचररचनातारतम्ये श्रीभ्रूभङ्गाः प्रमाणमिति भावः। वेदान्ताः–उपनिषदः तत्त्वचिन्तां ब्रह्मा शिवो विष्णुर्वा परतत्त्वमिति संशयं मुरभिदुरसि श्रीरघुनाथवक्षसि यत्पादचिह्नैः यस्याः श्रियः पादचिह्नैः पादालक्तकाङ्कैः तरन्ति निरतिशय दीप्त्यापादक श्रीपदमुद्रित श्रीरघुनाथ एव परतत्त्वमिति निर्णयेन निवृत्तसंशयाः भवन्ति। अत्र वेदान्ताः इत्यनेन

चैतन्ययोगिनस्तदधिष्ठातृ पुरुषाः उच्यन्ते—वेदान्तिनः इत्यर्थः। भगवद् वक्षोनिष्ठ लक्ष्मीचरणलाक्षालक्ष्मदर्शनेन वेदान्तिनः निश्चिन्वन्ति यद् श्रीवत्सवक्षसं भगवन्तं विहाय अन्ये देवाः परतत्त्वभाजो भवितुं नार्हन्ति, अतएव निवृत्तसंशयाः भवन्ति। 'हिरण्यगर्भः समवर्तताग्रे' 'इन्द्रो मायाभिः पुरुरूप ईयते'। 'एक एव रूद्रो न द्वितीयाय तस्थे' 'एको ह वं नारायणासीत्' 'ॐ यो वै ह श्रीरामचन्द्रः स भगवान्' इत्यादि वेदमंत्रेषु नानादेवता पारम्यं प्रतिपादितम्। तत्र नारायणश्रीरामादि भगवद्विग्रहस्यापि तत्साधारण्येन पारम्यं प्रतिपादनादुक्तेष्वेतेषु कः परतत्त्वमिति संशये सति स्वयं निर्णेतुमसमर्थाः, श्रीजानकीरमणमासेव्य-तत्पादाम्बुजद्वन्द्वप्रसादलेशानुगृहीताः, तदुरस्थ श्रीपदलाञ्छन दर्शनेन परतत्त्वं श्रीसीतापतिमिति निश्चिन्वन्ति इति भट्टार्यस्य निगूढं तात्पर्यम्। श्रीमद्रामयणेऽपि श्रीजानकी सम्बन्धेन श्रीरामस्योत्कर्षः वर्णितः महर्षिणा— 'अप्रमेयं हि तत्तेजः यस्य सा जनकात्मजा'।

यथा पुरुषसूक्ते भगवान् श्रीरामः प्रतिपाद्यते तथा श्रीसूक्ते श्रीसीता प्रतिपाद्यते। 'इदं हि पौरुषं सूक्तं सर्ववेदेषु पठ्यते' इत्युक्त प्रकारेण यथा सर्ववेदेषु पुरुषसूक्तं लभ्यते तथा सर्वासु वेदान्तशाखासु श्रीसमृद्धिं वर्णयति श्रीसूक्तं तथाहि—

'हिरण्यवर्णां हरिणीम् सुवर्णं रजतस्रजाम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह॥'

**'हिरण्यवर्णाम्'**—हिरण्यस्य वर्ण इव वर्णो यस्यास्ताम्—तद्वत्पीतभास्वरविग्रहवर्णाम्। अनेन श्रीविग्रहस्य निर्मलत्वप्रतीत्या

हेयप्रतिभटत्वं सूचितम् । यद्वा हिरण्यमिव स्पृहणीयो वर्णः श्रीरिति शब्दो यस्यास्ताम्, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः' इत्यादि छान्दोग्योक्त अन्तरादित्य विद्यायां यत्स्पृहणीय भगवद्दिव्य मंगलमय विग्रहस्य प्रतिपादनमस्ति तत्-श्रीविषयेऽपि विदेलिमम् । 'सूर्यमण्डलमध्यस्थं रामं सीता समन्वितमिति सनत्कुमार संहितायां श्रीसीतासमन्वित श्रीरामस्य सूर्यान्तरवर्तित्वमुक्तम् ।

**'हरिणीम्'**—सुवर्ण प्रतिमां तामिवौज्वल्य सौन्दर्य लावण्यवतीम् । यद्वा हरिणीं मृगीं तद्वद्विशाललोचनाम्, हरिं नयति चेतनमिति चेतनानां भगवदाश्रयणे पुरुषकारभूतां वा हरिणीम् ।

**सुवर्णरजतस्रजाम्**—तत्तद्दिव्यावयवोचित सुवर्णरजतादिमय दिव्य भूषण कलापाम् ।

**चन्द्राम्**—चन्द्रसदृशीमाह्लादिनीं वा । 'आह्लादिनीं परां शक्तिं स्तुयाः सात्वत सम्मतामिति श्रीजानकीस्तवराजे आह्लादिनी पराशक्तिरूपेण तस्याः प्रसिद्धेः ।

**हिरण्मयीम्**—तस्मिन्कामास्समाहिताः इतिवद् हिरण्यवत्स्पृहणीयकल्याणगुणगण प्रचुराम् । हिरण्यप्रभृति सकलधन प्रचुराम्वा ।

**लक्ष्मीम्**—भगवतश्चेतनानाञ्च सम्पदम्, यद्वा-चिह्नं लक्ष्म च लक्षणमित्यमरकोषात्, लक्ष्माण्युत्तमस्त्रीलक्षणान्यस्यास्सन्तीति लक्ष्मीस्ताम्, वर्णितं वेदावतारे- 'सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः' ।

**जातवेदः**—जातं स्वतः सिद्धं वेदः धनं, ज्ञानं, यशो वा यस्य स जातवेदाः तत् सम्बुद्धौ हे जातवेदः लक्ष्मीपते ! पूर्वोक्त स्वरूपगुणविशिष्टां तां लक्ष्मीं तत्समाश्रयणोन्मुखस्य **मे**— मम सर्वोपकरण समृद्धयर्थं **आवह**--सन्निधापय। लक्ष्मीं निरीक्षणा- देव सर्वेषां समृद्धिरिति फलितोऽर्थः।

'तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषान् अहम्।' इति द्वितीयमन्त्रेण

**'ताम्'**—पूर्वोक्तकल्याणगुणगण सम्पन्नाम्।

**लक्ष्मीम्**—चतुर्मुखशतमखादिसकलसुरासुरप्रार्थनीय विभव- लक्षणाम्। 'ब्रह्मशादिसुरव्रजस्सदयितस्त्वद्दासदासीगणः' इति यामुनाचार्यवचनात् चतुर्मुखादि सदयितानां देवानां श्रीलक्ष्म्याः दास्यं स्पष्टं श्रूयते॥ **मे**—मत्सेवार्थं **'आवह'**—मयि सन्निधापय। कथमित्यपेक्षायाम् **अनपगामिनीम्**—वात्सल्यातिशयेन दोष- भूयस्त्वेऽप्यविमुक्त चेतनजाताम्। भगवन्नित्यानपायिनीम्वा। यद्वा-मत् समीपादन्यत्र कदाचित् क्वचित् गन्तुं नेच्छन्तीं यथा लक्ष्मी मयि नित्यानपायिनी स्यात् तथा कुरु। **यस्याम्**— सकला- पेक्षितप्रदातृत्वेन श्रुतिस्मृतिसिद्धायाम्।

**हिरण्यम्**—हिरण्यरूप्यादि। **गाम्** – गोमहिषादिजीवधनम्, **अश्वम्**—रथगजतुरगादिवाहनसमृद्धिम्, **पुरुषान्**—दासीदास- परिचारकान् सर्वैर्विभवैर्विहीनोऽहम् **विन्देयम्**— सर्वां विभूतिं लभेयेति। 'अश्वपूर्वां रथमध्यां हस्तिनाद प्रबोधिनीम्। श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम्।' इति तृतीयमंत्रेण देव्याः

निरतिशयैश्वर्यं सूचयति–तथाहि **अश्वपूर्वाम्**-- अश्वाः पूर्वं प्रथम प्राकाराजिरसंस्थिता यस्यास्तां अश्वपूर्वाम्। **रथमध्याम्**- रथाः मध्यमप्राकाराजिरस्था यस्यास्तां रथमध्याम्। **हस्तिनाद-प्रबोधिनीम्**-- हस्तिनां ततोऽपि तृतीयप्राकाराजिरवर्तिनां दन्तिनां नादैर्बृंहितैः प्रबोधिनीं जागरणशीलाम्। श्रीसीतादिव्य-नगरे प्रथम प्राकारावृतवीथ्यामश्वाः, द्वितीयप्राकारावृतवीथ्यां रथाः, तृतीयप्राकारावृतवीथ्यां हस्तिनश्च निवसन्ति। तत्र हस्तिनां तृतीयप्राकारान्तःस्थस्थिततया तेषां लक्ष्मीदिव्यभवन सान्निध्यात् तन्नादैः सुप्रातः प्रबुद्धा भवतीत्यर्थः। अनेन तस्याः निरतिशयैश्वर्यं सूचितम्। श्रीरामायणे अस्य मंत्रस्य व्याख्या श्रीसीतारामान्तःपुर वैभव वर्णनावसरे कृता महर्षिणा—

ततो ददर्श रुचिरं कैलाससदृशप्रभम्।
रामवेश्म सुमन्त्रस्तु शक्रवेश्मसम प्रभम्॥
महाकवाट विहितं वितर्दिशत शोभितम्।
कांचनप्रतिमैकाग्र मणिविद्रुमतोरणम्॥
शारदाभ्रघनप्रख्यं दीप्तमेरुगुहोपमम्।
मणिभिर्वरमाल्यानां सुमहद्भिरलंकृतम्॥

मुक्तामणिभिराकीर्णं चन्दनागरु धूपितम्। गन्धान्मनोज्ञान् विसृजद्दार्दुरं शिखरं यथा। सारसैश्च मयूरैश्च विनदद्भिर्विराजितम्। सुकृतेहामृगाकीर्णं सुकीर्णं भक्तिभिस्तथा। मनश्चक्षुश्च भूतानामाददत्तिग्मतेजसा। चन्द्रभास्करसंकाशं कुबेर भवनोपमम्। महेन्द्रधाम प्रतिमं नानापक्षिसमाकुलम्। मेरुश्रृङ्गसमं सूतो राम वेश्म ददर्श ह॥ महेन्द्रसद्म प्रतिमं तु वेश्म रामस्य

रम्यं मृगपक्षि जुष्टम् । ददर्श मेरोरिव शृङ्गमुच्चं विभ्राजमानं प्रभया सुमन्त्रः । उपस्थितैरञ्जलिकारकैश्च सोपायनैर्जानपदैश्च मर्त्यैः । कोट्या परार्द्धैश्च विमुक्तयानैः समाकुलं द्वारपथं ददर्श । ततो महामेघमहीधराभं प्रभिन्नमत्यङ्कुशमप्रसह्यम् । रामौपवाह्यं रुचिरं ददर्श शत्रुञ्जयं नागमुदग्रकायम् । स्वलंकृतान् साश्वरथान् सकुंजरानमात्यमुख्यान् शतशश्च वल्लभान् । व्यपोह्य सूतः सहितान् समन्ततः समृद्धमन्तःपुरमाविवेश । (वा० २-१६,

**श्रियम्**—एवं निरंकुशैश्वर्येऽपि चेतनरक्षणतृष्णाय। भगवन्तमाश्रिताम् । तत्फलमाह - **देवीमिति**—देवयति क्रीडयति कान्तमिति देवी ताम् भगवतो भक्तदोषालक्ष्यीकरणाय तस्यक्रीडापारवश्यमापादयन्तीमित्यर्थः। श्रीपराशरभट्टार्योप्याह-'पितेव त्वत्प्रेयान् जननि परिपूर्णागसिजने, हितश्रोतो वृत्या भवति च कदाचित्कलुषश्रीः । किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः' इत्यादिना । एव भूताम् श्रियमाह्वयामि । एवं भूता श्रीः देवी मयि जुषतां कृपां कुर्यादित्यर्थः ।

'कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥

तामिति चतुर्थं मन्त्रेण श्रीदेव्याः आनुकूल्यं प्रार्थयते—

**काम्**— कं सुखमस्या अस्तीति कां सुखरूपां सर्वानुकूलस्वभावामित्यर्थः । तत्स्वभावमेव विशदयति- **सोस्मितामिति**—उत् अतिशयितं स्मितम् उत्स्मितम् , उत्स्मितेन सहवर्तत इति सोत्स्मिता ताम् निस्सहायापराधजन निश्शंक संश्रयणाय नित्य व्यक्त

मन्दहासाम्। अनेनानुग्रहमयीत्वम् सूचितम् तत्कार्यमाह हिरण्येति **हिरण्यप्राकाराम्**—अजायमानो बहुधा विजायते स उ श्रेयान् भवति जायमानः इतिवत् 'देवत्वे देवदेहेऽयम् मनुष्यत्वे च मानुषी, राघवत्वे भवेत् सीता, रूक्मिणी कृष्णजन्मनि'। अन्येषु चाव-तारेषु विष्णोरेषानपायिनी'। इतीच्छाकृतोज्ज्वलानेक भगवदभि-मतानुरूपविग्रहाम्। हिरण्मयप्राकार परिवृतानन्दमय महामणि-मण्डपान्तर्निवासिनीम्वा। **आर्द्राम्**— अनुकूलविषये दयार्द्रदृशम् अनुकूलतेजसम्वा। **ज्वलन्तीम्** प्रतिकूलविषये ज्वलन्तीं तदभि-भावक तेजो युक्ताम्। 'नित्यानुकूलमनुकूलनृणां परेषामुद्वेजनं तव तु तेज उदाहरन्ति' इति भगवद्विषये कथिता श्रीवत्सांक श्रीसूक्तिः श्रीविषयेऽपि समाना। **तृप्ताम्**–स्वकृतेन भगवत्स्वरूप रूपगुणविभूत्यनुभवेन तत्संश्लेषजनितानन्देन तृप्ताम्। **तर्पयन्तीम्**--भगवत्कृत स्वरूपाद्यनुभवेन स्वसंश्लेष सुखेन वा तं तर्पयन्तीं स्वस्वकान्तोभयस्वरूपरूपगुणविभूत्यनुभव प्रापणेन संश्रितांस्तर्पयन्तीम्वा। 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ।' इत्युक्त चतुर्विधाधिकारिणस्तत्तदभिलषित प्रापणेन तर्पयन्तीम्वा। **पद्मेस्थिताम्**– स्वसौन्दर्य सौगन्ध्य सौकुमार्यानुगुण सुन्दर सुगन्धसुकुमार सरसिजासनासीनाम्। **पद्मवर्णाम्**–'सर्वलक्षण-सम्पन्ना नारीणामुत्तमा वधूः। सर्व सीमन्तिनीभ्यश्च सीता सीमन्तिनीवराम्। अमन्यन्त हि ता नार्यः रामस्य हृदयप्रियाम्' इत्युक्त प्रकारेणोत्तमकान्तात्वेन, पद्मारुणपाणिपादतलप्रान्त-लोचनां, पद्मसमविग्रह वर्णाम्वा। **श्रियम्**–सर्वैराश्रयणीयां, एवं-भूतकल्याणगुणगणविशिष्टां, सौन्दर्यमाधुर्य लावण्य सौकुमार्य

सौगन्ध्यसिक्तां श्रियं; **ताम्**—श्रियं-सर्वैः प्रकारैः समाश्रयणीयां **इह**—तच्छेषतैकस्वरूपे मयि **उपह्वये**-- तदनुकूलाञ्जलिमुद्रादिभिरभिमुखी करोमीत्यर्थः ।

'चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्।
तां पद्मनेमिं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वाम्वृणे ॥'

आहूतामागतां श्रीदेवीं ताम्प्रपद्य अलक्ष्म्या नाशं वृणुते चतुर्थमन्त्रेण **चन्द्राम्**—चन्दयत्यानन्दयति चेतनानीश्वरञ्च स्वगुणैरिति चन्द्रा ताम् ।

**प्रभासाम्**--भासो भासनं तदानंदजनितहर्षसम्भूत प्रकृष्ट कान्तिम् । 'अभिषिच्य च लंकायां राक्षसेन्द्रं विभीषणम् । कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह' इतिवत् । यद्वा प्रकृष्टतया भासमानां प्रभासां शुद्धसत्त्वप्रकाशशुभाश्रय दिव्यमंगल विग्रहाम्। **यशसा**--संश्रितानां सर्वाभीष्ट प्रापण कीर्त्या **ज्वलन्तीम्**-लोके प्रकाशमानां अथवा देवस्य सर्वेश्वरस्य सहधर्मचारिणीत्वेन सर्वलोकविदितेन गुणवत्व सौभाग्येन यशसा ज्वलन्तीं अनुकूलाननुकूलास्वाददतापकर दिव्यज्योति स्वरूपाम् , अथवा निरतिशय मंगल विभूत्यादिमत्तया तथाविधगुणविभूत्यादि प्रदतया अनुग्रहैक स्वरूपतया च दीप्यमानाम् । **श्रियम्**—जगद्गुणैर्योजयन्तीं सर्वसमाश्रयणीयां वा । श्रृणोति श्रावयति इत्याद्युक्त प्रापकत्वोपयुक्त समस्ताकारवतीम् । **देवजुष्टाम्**-- देवे नारायणे जुष्टां प्रीतां, प्रेमसम्पन्नां, देवैर्ब्रह्मादिभिस्तत्तदभिलषितलाभाय जुष्टां सेवितां वा, यद्वा लोके विभूतिद्वये देवजुष्टां देवैः चतुर्मुखशिवशतमख हुतवहादिदेवैरनन्तगरुडादिभिर्देवोत्तमैश्च स्वपदलाभाय

तदनुगुणसमृद्धये आनन्दानुभवाय च यजनभजनमननादिभिः जुष्टां सेव्यमानाम्। यद्वा देवेन निरूपाधिक क्रीडनादिमता भगवता निरतिशयप्रीति विषयी कृताम्। **उदाराम्**--वाञ्छाधिकदातृत्व लक्षण निरतिशयौदार्यम्। उक्तञ्च- भट्टपराशरपादैः श्रीगुणरत्नकोशे 'ऐश्वर्यमक्षरगतिं परमं पदं वा कस्मैचिदञ्जलि भरंवहते वितीर्य। अस्मै न किञ्चिदुचितं कृतमित्यथाम्ब त्वं लज्जसे कथय कोऽयमुदारभावः।' **ताम्**— उक्तवैभव-युक्ततया सर्ववेदान्त प्रसिद्धाम्। **पद्मनेमिम्**—नेमिः सुदर्शनं पद्मं नेमिरिव यस्यास्तां चक्राकार विकसितपद्मपाणिमित्यर्थः। यद्वा पद्ममेव नेमिर्नयनं साधनं यस्यास्तां, स्वकरस्थ कमलेनाश्रितानामनिष्टमपनीय सर्वमिष्टमुपनीय स्वचरणाम्बुजे तान् प्रापयन्तीमित्यर्थः।इह चामुत्र चानिष्ट निवृत्तीष्टाप्तिसिद्धये। साक्षाल्लक्ष्म्याः पदाम्भोजे भूयास्तां शरणं मम'। **अहम्**--अत्यन्ताकिञ्चनोऽहं उपायान्तरशून्यः शरणम्प्रपद्ये।

**त्वां वृणे**— त्वच्चरणारविन्दयुगलमेवपरमोपायमध्यवस्यामि। अनया प्रपत्त्या त्वत्प्राप्ति विरोधिनी **अलक्ष्मीः**-- मे त्वत्स्मृति कीर्तनादौ प्रवृत्तात्मत्तः **नश्यताम्**-- नश्यतु। यद्वा--

**शरणम्प्रपद्ये**— निरपेक्षमदभिमत साधकत्वाध्यवसाय पूर्वकं तव चरणारविन्दयोर्भरन्यासं करोमि। अस्मिन्मन्त्रे श्रीशब्दे- आनुकूल्य संकल्प प्रातिकूल्यवर्जनरूपमङ्गद्वयमनुसन्धेयम्। अहं शब्दे आकिञ्चन्यानुसंधानरूपं कार्पण्यमङ्गमनुसन्धेयम्।
**त्वां वृणे**—इत्यत्र गोप्तृत्व वरणरूपमङ्गमनुसन्धेयम्।

**शरणं प्रपद्ये**—इत्यत्र महाविश्वासरूपमङ्गम् भरन्यासरूपोऽङ्गी चानुसन्धेये । एवं मन्त्रार्थमनुसंधाय श्रीप्रपदनानुष्ठानं कर्त्तव्यमिति सम्प्रदायः। षष्ठमन्त्रेण मायादि विघ्ननाशार्थं श्रीदेवी प्राथिता । सप्तमे सर्वैश्वर्यलाभाय प्रार्थना । अष्टमे विषयस्पृहादि विरोधिस्वरूपनिरसनार्थं श्रीदेवीरभिनन्दिता । नवमेऽलक्ष्म्यादीन् स्वगृहात् दूरोत्सार्य पुनरेव सर्वेश्वरीं श्रियं देवीमाह्वयति ।

'गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

**गन्धद्वाराम्**— गन्धः दिव्यसौरभः द्वारे यस्यास्तां गन्धद्वारां, छान्दोग्ये 'सर्वगन्धः सर्वरसः' इति मन्त्रेण भगवतः सर्वगन्धाश्रयत्वमुक्तम् , तदिह श्रियोऽपि सर्वगन्धाश्रयत्वमभ्युपगन्तव्यम् । 'अशब्दमस्पर्शमरूपमव्ययं तथारसंनित्यमगन्धवच्च यदिति' कठोपनिषद्युक्तागन्धवत्त्वं, प्राकृतगन्ध निषेधपरमिति। अत्र निरवशेष दिव्यगन्धः उक्तः । अतएवाक्षरजुषां सनकादीनां भगवत्पादारविन्द दिव्य गन्धाघ्राणेन तेषां मनांसि शरीराणि च संक्षुब्धानि । तथाहि-- "तस्यारविन्दनयनस्य पदारविन्द किञ्जल्कमिश्रतुलसी मकरन्द वायुः । अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षर जुषामपि चित्ततन्वोः' । यद्वा गन्धशब्देन लक्ष्मीसमाराधनोपकरणभूतानि पुष्पधूपदीपनैवेद्यादीनि सर्वाण्युपलक्ष्यन्ते । तानि द्वाराणि यस्यास्ताम् ।

**दुराधर्षाम्—** पूर्वोक्त समाराधनोपकरणोपायरहितैश्च प्राप्तु-मशक्याम् । श्रीदिव्यभवनप्रवेशे भक्तानामेवाधिकारः नान्येषा-मिति भावः ।

**नित्यपुष्टाम्—**सर्वकाल सवदेश सर्ववस्तुष्वपि सर्वदा पुष्टाम् । कान्तसंश्लेषजन्यानन्द पुष्टां वा ।

**करीषिणीम्—**कर्षवतीम्, मृद्वतीं वा ।

**ईश्वरीं सर्वभूतानाम्—** चतुर्मुखशिवशतमखप्रभृति देवासुर सिद्धगन्धर्वमनुजादीनां सर्वेषां भूतानां नित्यसूरीणाञ्च ईश्वरीं नियन्त्रीम् । असु व्याप्तौ इति धातोः ईश्वरशब्दो निष्पन्नः व्यापित्ववाची,तथा च सर्वभूतेश्वरीं सर्वभूतनियन्त्रीं व्यापिनीं वा । 'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी । यथा सर्वगतो-विष्णुस्तथैवेयं द्विजोत्तम ।' इत्यादि स्मृतिवाक्यान्यप्यत्रानु-सन्धेयानि । अन्यत्रापि 'त्वयैतद् विष्णुना चाम्ब जगद् व्याप्तं चराचरम्' इति ।

**ताम्—** उक्तगुणलक्षणाम् । **इह—** पूर्वमलक्ष्म्यादि दूषिते साम्प्रतं तत्त्यागात् देव्यागमन योग्ये मत्सम्बन्धि देशविशेषे ।

**उपह्वये—**सर्वसमृद्ध्यर्थमाह्वयामि । **श्रियम्—** पुरुषकारत्वेनो-पायत्वेन चाऽश्रीयमाणाम् । अत्र श्रीशब्दस्य षोडा व्युत्पत्तिर-प्युनसन्धेया- 'श्रितास्यन्यैः सर्वैः श्रयसि रमणं संश्रितगिरः शृणोषि प्रेयांसं श्रितजनवचः श्रावयसि च । शृणास्येतद्दोषा-ञ्जननि निखिलान्सर्वजगतीं गुणैः श्रीणासि त्वं तदिह भवतीं श्रीरिति विदुः ॥' दशमेन सर्वविधसमृद्धिः प्रार्थिता । एकादशेन कर्दमस्य गृहे पुत्रीरूपेणावतीर्णां रमां तन्मुखेन प्रार्थयति । द्वादशेन

भगवदाराधनभूतोपकरणानि प्रार्थयते। आदरातिशयेन पूर्वोक्तायाः लक्ष्म्याः वैभवं पुनःप्राह चतुर्दशेन, अन्तिम पञ्चदश मन्त्रेण आद्यसूक्तार्थ तात्पर्यातिशयभूतां अनन्यगामिनीं देवीं पुनः आह्वयति तथा च-प्रणिपात प्रसन्नां जगज्जननीं हरियाचते। भट्टपराशरपादाः श्रीगुणरत्नकोशे एकेनैव श्लोकेन समग्र श्रीसूक्तस्य पुरुषसूक्तस्य च महातात्पर्यं लक्ष्म्यामेव पर्यवस्यतीति प्राचीकशन्-

'अस्येशाना जगत इति ते धीमहे यां समृद्धिम्। श्रीः श्रीसूक्त बहुमुखयते ताञ्चशाखानुशाखम्। ईष्टे कश्चिज्जगत इति यः पौरुषे सूक्त उक्तस्तञ्च त्वत्कं पतिमधिजगावुत्तरश्चानुवाकः। अयमाशयः—सामान्यवाचकानां शब्दानां विशेषे पर्यवसान नियमाङ्गीकारेण सद्ब्रह्मात्मनारायणशब्दाः, यथा छागपशुन्यायेन सामान्यविशेषभावनया नारायणे देवताविशेषे पर्यवसन्नाः, तथैव श्रद्धा-विष्णुपत्नी-श्रीशब्दाः सामान्यविशेषभावनया तन्न्यायेन लक्ष्मीरूपे देवताविशेषे पर्यवसन्नाः। केचित् संशेरते-- नन्वेवं श्रियोऽप्यनन्याधीनत्वे पतिवन्मुख्येश्वरत्वे, सर्वागमानामेकेश्वर परत्वाभावादैककण्ठ्यं न स्यादिति चेन्न—अन्योन्येच्छा विघातकयोः अन्योन्यगुणप्रधान भावगन्धरहितयोः अन्योन्यसाहित्यानादरेण जगद्व्यापारेषु पृथक् पृथक् प्रवृत्तिमतोर्द्वयोरीश्वरयोः प्रतिपादने हि आगमानामैककण्ठ्य हानिः, इह त्वनयोर्दाम्पत्यादि वचनबलात् अन्योन्येच्छा विघातराहित्ये समप्रधान भावराहित्ये जगद्व्यापारेषु पृथक् प्रवृत्तिराहित्यादौ च सर्वागमानां तात्पर्याभ्युपगमात्, ऐककण्ठ्यमुपपन्नम्। सर्वागमानामीश्वर व्यक्त्यैकपरत्वरूपमैककण्ठ्यं ह्यत्रदुरूपपादम्। श्री श्रीशविषय

सर्वभूतेश्वरत्व वचनयोर्द्वयोरपि तुल्यबलत्वेन तयोरन्यतरस्यापि, अन्यथा नेतुमशक्यत्वात्। अतो दम्पत्योरन्योन्येच्छाविघातादि राहित्ये तात्पर्यं वा, पत्युः प्रधानत्वेन प्रधानैक्यतात्पर्यं वा निरीक्ष्य सर्वागमानामैककण्ठ्यं निर्वाह्यम् । यथा भगवतो नियन्त्रन्तराभावेन तदैश्वर्यं स्वापेक्षयोत्कृष्टावधिरहितम् , तथा श्रीदेव्या अपि नियन्त्रन्तराभावात्, तदैश्वर्यमपि स्वापेक्षया-उत्कृष्टावधिरहितम्। उक्तार्थे प्रमाणञ्च—बलाबल वैषम्य-नियामकाभावेन समतुलारूढं परस्परबाधाद्यनर्हम्—उभयोरप्य-विशिष्टं सर्वभूतेश्वरत्व वचनम् ।

अत्र केचन एकेश्वरवादसमर्थनावसरे एकमेव परतत्त्वं सर्वकारणभूतं सृष्ट्यादि कार्यजातसम्पादनाय लीलारसानुभवाय च द्विधारूपं धत्ते, तथा च सृष्ट्यादि कार्यजात लीलारसानु-भवादि कार्य सम्पादनान्तरं पुनः तदेवाद्वयं रूपं धत्ते, तन्मते न सार्वदिकं युगलरूपमपितु सृष्ट्यादिकार्य सम्पादनायाल्प-कालिकमेव-इत्याहुः । तन्मतमप्यनेन श्रीविशिष्ट भगवत्तत्त्वै-केश्वरवाद प्रतिपादनेन निरस्तं भवति । 'ईश्वरीं सर्वभूतानाम्', 'सहस्रशीर्षा पुरुषः' इत्यादि श्रीसूक्त पुरुषसूक्त वचनेनोभयोः सर्वेश्वरत्व प्रतिपादनादेकेश्वरवादेऽपि युगलरूपं सार्वदिकमिति सूपपन्नतरम् ।

श्रीमद्रामायणेऽपि श्रीहनुमता श्रीसीतारामयोरन्योन्याभि-रूप्यानुगुण्यमुक्तम्-"अस्या देव्या यथा रूपमङ्ग प्रत्यङ्ग सौष्ठवम् । रामस्य च यथा रूपं तस्येयमसितेक्षणा । अस्या देव्या मनस्त-स्मिंस्तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्मात्मा मुहूर्तमपि

जीवति । तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् । राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ।” अस्याः सीतायाः रूपं शरीरं अङ्ग-प्रत्यङ्ग सौष्ठवं यथाविधं, तथाविधमेव रामस्यापि रूपं अङ्ग प्रत्यङ्ग सौष्ठवञ्च । तथा रामस्यरूपमङ्गप्रत्यङ्ग सौष्ठवञ्च-यथाविधं, तथाविधमेवास्याः रूपमङ्गप्रत्यङ्ग सौष्ठवम् । अतः इयमसितेक्षणा तस्य श्रीरामस्य योग्येति भावः । अनयोरन्योन्य-स्यानुरागोऽपि अदृष्टपूर्वमलौकिकमाह- ‘अस्या’ इति श्लोकेन । अस्या देव्या मनस्तस्मिन् श्रीरामे प्रतिष्ठतम्, तेन हेतुना इयं मुहूर्तमपि जीवति, तस्य मनोऽस्यां श्रीसीतायां प्रतिष्ठितम् , तेन कारणेन स मुहूर्तमपि जीवति, तयोरन्योन्यं, मनोनिवेशनाभावे मुहूर्तं जीवनमपि न घटत इति भावः । शीलवयोवृतादिभिरप्य-नयोस्तुल्यत्वमाह,- तुल्येति श्लोकेन — शीलं स्वभावः, श्रीरामस्य मनः सीतायां श्रीसीतायाः मनः श्रीरामेति प्रकृत्या तुल्य स्व-भावत्वम् । षोडश वार्षिकस्य श्रीरामस्य द्वादशवार्षिकी श्रीसीता तुल्या अन्यथा वैरस्यापत्तेश्शास्त्रविरोधाच्च । ‘दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम्’ इति रामवृत्तं, पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्ना-पराध्यतीत्युक्तवत्याः सीतायाः वृत्तेन तुल्यम् ।

अभिजनः— कुलम् , लक्षणं सामुद्रिकम्, सार्वभौमलक्षणवतो-भार्यायाः यैस्सामुद्रिकैर्लक्षणैर्भाव्यम् तैर्युक्तामित्यर्थः अत्रतुल्य-शब्दोऽनुरूपपरः । रामानुरूपशीलवयश्चारित्रामित्यर्थः । एवं विधत्वाद्राघवो वैदेहीमर्हति, वैदेही राघवमर्हति । लोके सौन्दर्या-दिमतः सौन्दर्यादि सर्वसहिता न लभ्यते । सौन्दर्यादिमत्या न

सौन्दर्यादि सर्वत्रान् लभ्यते। अनयोस्तु सर्वमनुरूपमिति हनुमान् विस्मयते। असितेक्षणेत्यधिकविशेषणदानाद्रामापेक्षया श्रीसीतायाः नयनगत सौन्दर्यमधिकमित्युच्यते। अतएव श्रीरामेणाप्युक्तम्— 'न जीवेयं क्षणमपि विना तामसितेक्षणाम्'। केवल सौन्दर्याधिक्यमेव श्रीसीतायां नास्ति किन्तु प्रेमाधिक्यमपि इति हनुमान विममर्श। दुष्करं कुरुते रामो हीनो यदनया प्रभुः। धारयत्यात्मनो देहं न शोकेनावसीदति। माल्यवति शैले श्रीरामस्य श्रीसीताविरहक्लेशातिशयं निशाम्य हन्त! वसिष्ठशिष्यः कस्याश्चित् स्त्रियाः कृते कथमेवं शोकपरायणोऽभूदिति विचार्य स्वकीय वैराग्याऽतिशयेन हनुमान् परिहसितवानासीत् सम्प्रत्यस्याः वैलक्षण्यातिशय दर्शनेन विशेषज्ञतया,एतद्विरहे रामस्यदेहधारणं सर्वात्मना अशक्यमित्याह दुष्करमितिश्लोकेन-'इमां वियुज्य समाधान परो रामः प्रकाममशक्यं कृत्यमकरोत्। हीनो यदनया प्रभुः, अनया विना देहं धृत्वाऽवस्थितः इति यत्तदत्यन्तमशक्यम् सर्वसमर्थः प्रभुः गजाश्वादिकं शिक्षयितुं राज्यं पालयितुं च सम्यक् जानाति, किन्तु न प्रणय धारायां प्रथमांशमपि भुक्तवान्। धारयत्यात्मनोदेहं, श्रीसीताशरीरस्य परतन्त्रतया तत्त्यक्तु मयुक्तम् नतु स्वाधीनशरीरस्यधारणं श्रीरामस्य युक्तमिति हनुमतोऽभिप्रायः। अनेन श्रीसीतारामयोः परस्पर समानैश्वर्यं, पृथगिच्छाराहित्यम्, सममनस्कम्, समानहृदयं--उभयोरप्यविशिष्टम् सर्वभूतेश्वरत्वादिकञ्च वर्णितम्॥

चतुश्श्लोक्यां श्रीयामुनाचार्य स्वामिभिः श्रीदेव्या निरवधिकमहिमा प्रतिपादितः--

यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभु-
र्नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः।
तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयो-
लोकैकेश्वरि लोकनाथ दयिते दान्ते दयान्ते विदन् ॥

वेदान्तदेशिक स्वामिभिः चतुश्श्लोकी भाष्ये-विभूतिद्वय-शेषित्वरूपम् निरतिशयानुकूलगुणयोगरूपञ्च महिमानमित्यर्थो-विवृतः। विषयस्यापरिच्छिन्नत्वात् तत्र सर्वज्ञस्य सर्वशक्तेरपि परिच्छिन्नत्व ज्ञानाभावो न दोष इति भावः। 'नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः' इति सर्वसमर्थः प्रभुरपि श्रीदेव्याः वल्लभोऽपि नालं मातुमियत्तया परिच्छिद्यानुसन्धातुमसमर्थः इत्यपि प्रत्यपादि। श्रीस्तवे श्रीवत्सांकमिश्रपादाः- श्रीदेव्याः महिमावधिर्न श्रिया ज्ञायते नापि हरिणा ज्ञायते इति प्रतिपादितवन्तः—

देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते. यद्यप्येवमथापि नैव युवयोस्सर्वज्ञता हीयते। यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञतायाः विदुर्व्योमाम्भोजमिदन्तया किल विदन् भ्रान्तोऽयमित्युच्यते ॥ यस्याः मुखं वीक्ष्य तदिङ्गित पराधीनो हरिः सृष्ट्याद्यखिलं कार्यं विधत्ते,तां विना हरेः क्रीडा रसदा न भवति, तयैव सह ऐकरस्या स्यादिति श्रीस्तवे प्रत्यपादि।

तथाहि-यस्याः वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्,
क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तया ॥

शरणागतिगद्ये श्रीभगवद्रामानुजाचार्यैः- श्रीदेव्याः स्वरूपरू

गुण विभवादिकमित्थं वर्णितम्-- भगवन्नारायणाभिमतानुरूप-स्वरूपरूपगुण विभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याण-गुणगणाम् पद्मवनालयाम् भगवतीम् , श्रियम्, देवीम्, नित्यान-पायिनीम् , निरवद्याम्, देव देवदिव्यमहिषीम्, अखिल जगन्मात-रम् अस्मन्मातरम् अशरण्यशरण्याम् अनन्यशरणः शरणमहं प्रपद्ये ॥

चतुश्श्लोक्याम् श्रीदेव्याः सकल पुरुषार्थ हेतुत्वम् , तस्याः करुणा निरीक्षणसुधासन्धुक्षणादेव विश्वरक्षणम् तन्निरीक्षणा-लाभादेव भुवनत्रयस्य संहारादिकञ्च वर्णितम । यथाहुः--

ईषत्त्वत्करुणा निरीक्षण सुधासन्धुक्षणाद्रक्ष्यते
नष्टं प्राक्तदलाभतस्त्रिभुवनं संप्रत्यनन्तोदयम् ।
श्रेयो नह्यरविन्दलोचनमनः कान्ता प्रसादादृते
संसत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित् ॥

श्रीलोकाचार्य स्वामिभिः श्रीवचनभूषणे श्रीदेव्याः वैभवः सम्यक् प्रकाशितः। तथाहि— इतिहास श्रेष्ठेन श्रीरामायणेन 'कारागृहवासकर्त्र्या वैभव' उच्यते- अस्य सूत्रस्य व्याख्यानं-कुर्वता श्रीवरवर मुनि स्वामिनोक्तम् यत् लक्ष्म्या इत्यनुक्त्वा "कारागृह वासकर्त्र्या, इत्युक्तं तस्या दयातिशयं प्रकाशयितुम् । देव देवदिव्य महिष्याः स्वस्या उत्कर्षं कारागृहवासस्यापकर्षञ्चा-पश्यन्ती देवस्त्रीणां बन्धनं निवारयितुं स्वयं बन्धनेऽतिष्ठद्दया पारवश्यादेव । प्रजायां कूपे पतन्त्यां सह पतन्ती मातेवैतच्चेतन-पतन स्थाने संसारे स्वयमपि सहैव जनित्वैतैरनुभूयमानं

क्लेशमनुभूय रक्षति। तस्मान्निरूपाधिक मातृत्व सम्बन्धस्य तत्प्रयुक्त निरतिशय वात्सल्यस्य च प्रकाशनं श्रीमद्रामायणे सर्वत्र दृश्यते। 'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महदि' त्यनेन समग्ररामायणं श्रीसीतायाः महच्चरित्रं विद्यते इति-महर्षिणा प्रत्यपादि।

श्रीरामकथापेक्षया सापराधेष्वपि रक्षणप्रवणत्व प्रतिपादनात् श्रीसीताचरितस्य वैशिष्ट्यं विचार्यैव महर्षिणा श्रीसीता-चरितस्य महदिति विशेषणम् प्रदत्तम्। 'ईश्वरीं सर्वभूतानां' 'हेमाभयां द्विभुजया'इत्यादि श्रुति वाक्यैरेव न केवलं श्रीसीतायाः वैभवस्य प्रकाशनं किन्तु श्रीमद्रामायणमपि अस्याः वैभव प्रका-शनेनैव परं प्राणितीति भट्टार्याः प्राहुः—

उद्वाहुस्त्वामुपनिषदसावाह नैका नियन्त्रीम्
श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे।
स्मर्तारोऽस्मज्जननि यतमे सेतिहासैः पुराणै-
र्निन्युर्वेदानपि च ततमे त्वन्महिम्नि प्रमाणम्॥

अत्र परमिति क्रियाविशेषणेन तस्या उत्कर्षमाह। तथा च रामादिचरित्रे श्रीमद्रामायणं प्राणिति जीवनमात्रमेव धत्ते, त्वच्चरित्रे तु परं प्राणिति सोत्कर्षं जीवतीत्यर्थः। अतिशयित जीवनस्यैव फलत्वादिति विदितचरम्।

पुरुषकारभवनसमये कृपा पारतन्त्र्यमनन्यार्हत्वञ्चापेक्षितम् इति श्रीलोकाचार्य स्वामिभिः सूचितम्। पुरुषकार भवनस्थले कृपा- परदुःखासहिष्णुत्वम्। पारतन्त्र्यम् – तदधीनत्वम्।

अनन्यार्हत्वम्- तद्व्यतिरिक्तविषयानर्हत्वम् । चेतनैः संसारे अनुभूयमानं दुःखं दृष्ट्वा तदसहिष्णुतयेश्वरेणैतान् घटयितुमुपयुक्तम् यत्नं कर्तुं दयाऽपेक्षिता । स्वतन्त्रस्य वशीकरणसमये अनुवर्तनेन वशीकर्त्तव्यत्वात् पारतन्त्र्यमपेक्षितम् । अस्मद् व्यतिरिक्तस्य कस्यापि विषयस्यानर्हत्वेनास्माकमतिशयकरवस्तुत्वादस्मत्कार्यमेव वदति,, इत्युक्त प्रकारेण कर्तुमुपयुक्तत्वादनन्यार्हत्वमपेक्षितम् । तस्मादेतत् त्रितयमपि पुरुषकारत्वस्यावश्यापेक्षितम् । श्रीरामकृपापेक्षया अस्याः कृपायाः को विशेष इति जिज्ञासायाम् समाधत्ते —

ईश्वरस्य निरंकुशस्वतन्त्रत्वात् निग्रहानुग्रहयोरूभयोरपि निर्वाहकत्वात्, चेतनकर्माणि तोलयित्वा, छित्त्वा, भोगयितृत्वाच्च तस्य कृपा स्वातन्त्र्येण निमग्ना कासुचिद्दशासूद्भवति । अस्याः अनुग्रहैकशीलत्वात्, एतत्कृपायाः अन्येन केनचिदभिभवस्याभावात् सदैकरूपा भवति । तस्मादेतत्कृपोद्वेलं तिष्ठति । भगवद्विषये अस्याः पारतन्त्र्यानन्यार्हत्वे स्वरूपप्रयुक्तत्व मात्रं विना· 'ह्रीश्चते लक्ष्मीश्च पत्न्यौ', इत्युक्त पतित्व प्रयुक्ते ।

श्रीसीतायाः प्रथम विश्लेषः स्वकृपाप्रकाशनार्थम्, अतएव-देवस्त्रीणां बन्धनं मोचयितुं स्वयमेव कारागृहं तस्थौ ।
उक्तं भट्टार्यैः—

'मातर्मैथिलि राक्षसीस्त्वयि तदैवार्द्रापराधास्त्वया,
रक्षन्त्या पवनात्मजाल्लघुतरा रामस्य गोष्ठी कृता ।

काकं तञ्च विभीषणं शरणमित्युक्तिक्षमौ रक्षतः,
सा नः सान्द्रमहागस्ससुखयतु क्षान्तिस्तवाकस्मिकी ११।

अत्र केचित्---प्रणिपात प्रसन्ना हि मैथिली जनकात्मजा, इति श्रीरामायण वचनेन श्रीमैथिली क्षमाया अपि प्रणिपातहेतुकत्व प्रतीतेराकस्मिकत्वं नास्तीति वदन्ति- तदापात प्रतीति विलसितम्। तथाहि- कल्याणस्वप्नदर्शिन्या त्रिजटया राक्षस्यः बोधिताः यच्छ्रीमैथिल्याः,श्रेयः कालः समागतस्तदेनां मा पीडयत, प्रत्युच्छरणं गच्छत। रावणे हतेऽपि युष्मानियं रक्षिष्यति। महापराधकारिणीरस्मान्कथं रक्षिष्यतीति शंकाकुलाः राक्षसीः पुनर्बोधयन्ती त्रिजटा प्रणिपात प्रसन्ना हि मैथिलीजनकात्मजेत्यौचित्या तासां शंकां परिहृतवती।

यद्यपि त्रिजटया स्वबुद्धयैव प्रोक्तं मैथिली प्रणिपातप्रसन्नेति। वस्तुतस्तु प्रणिपात प्रसन्नता हि मैथिली धर्मो नास्ति अतएव रावणवधानन्तरमपि तद्वधापरिज्ञानेन हिंसमाना राक्षसीर्हनुमतो रक्षितवती अथ च स्वविषये महापराधिनं काकासुरं विमुखपतितं श्रीरामपादारविन्दयोर्योजितवती। अतस्साधूक्तम्-'क्षान्तिस्तवाकस्मिकी' ति। एतच्छङ्कायाः परिहारः श्रीगुणसुधासारलहरीस्तोत्रे श्रीवीरराघवाचार्यैः श्लोकयुग्मेनेत्थं कृतः-'तव क्षान्तिं भट्टारक गुरुरवादीत्तवनुतावकस्मादुद्भूतामिह जननि केचिज्जडधियः। प्रसन्ना हीत्युक्तेः प्रणिपतनतो मैथिलसुता सहेतुस्साऽपि स्यादिति जगदुरापातमतितः।

स्वबुद्ध्यैव प्रोक्तं प्रणतसुमुखीति त्रिजटया, न चैतद्धर्मस्ते नलिनदलनेत्रप्रियतमे । अनेकाक्षी प्रख्यायत बहुल हिंसानवधिक प्रवृद्धार्द्रागस्काः पवनतनयाद्रक्षितवती ॥ अतः श्रीमैथिल्याः कृपा प्रणिपात परतन्त्रा नास्ति किन्तु सर्वथा आकस्मिकी । एतत्कृपा-प्रकाशनार्थमेव प्रथमविश्लेषः । मध्यमविश्लेषः पारतन्त्र्य प्रकाश-नार्थमेव । एतद्विश्लेषस्य प्रयोजनमिदमेव यत् भगवान् मामन्तःपुरे स्थापयतु वने वा प्रेषयतु, मया तु सर्वदा तच्चित्तानुवर्तनमेव कर्त्तव्यम्, इति श्रीजानकी स्वपतिनत्व प्रयुक्त पारतन्त्र्यमत्र मध्यम विश्लेषे प्रकाशितवती ।

श्रीलक्ष्मणं प्रति श्रीजनकनन्दिनी प्राह—

'न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले ।
त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ॥'

अनेन श्रीजानक्याः पतिपारतन्त्र्यं प्रकाशितम् ।

अनन्तर विश्लेषोऽनन्यार्हत्व प्रकाशनार्थम् । अनन्तर-विश्लेषो नाम पुनरागत्य (रावणवधानन्तरं) भगवत्सन्निधौ वर्त-मान दशायां विश्लिष्य जन्मगृहप्रवेश इति तृतीय विश्लेष उच्यते—

'अनन्या राघवेणाऽहं भास्करेण प्रभा यथा' 'अनन्या हि मया सीता भास्करेण प्रभा यथा' इत्युभयसम्मतस्य स्वानन्यत्व प्रयुक्तानन्यार्हत्वस्य प्रकाशनमेव, तृतीय विश्लेषस्य प्रयोजनम् ।

विश्लेषत्रयस्य हेतुरेतेषां गुणानां प्रकाशनम् । अन्यथानपा-यिन्या अस्याः कर्मवश्यस्येवैवं विश्लेषस्य हेतुर्नास्ति । स्वस्याः पुरुषकारतोपयोगि गुणान् पुरुषकारत्वञ्च प्रकाशयितुम्

खल्वयमवतारः। भट्टार्यैः प्रतिपादितम् यत्- क्षमासौशील्यौदार्यकारुण्याश्रितवात्सल्यादि गुणाः मुख्यरूपेण सीतावतारे एव चकासति।' यथा-

'सीतावतार मुखमेतदमुष्य योग्यम्'

संश्लेष विश्लेषोभयदशायां श्रीसीतायाः पुरुषकारत्वं लोकाचार्य स्वामिभिः प्रतिपादितम्। यथा—

संश्लेषविश्लेषयोरूभयोश्च पुरुषकारत्व भासते। संश्लेषदशायां बाल स्वामिना स्वामिनो वनगमनसमये श्रीसीता सहितस्यैव श्रीरामस्य शरणवरणं कृतम्।

स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः।
सीतामुवाचातियशा राघवं च महाव्रतम्॥

पञ्चवट्यां स्थितिसमये जलच्छायाभ्यां समृद्धे कस्मिंश्चिद्देशे पर्णशालां रचयेति स्वामिन्यभिदधति मयि यदा स्वातन्त्र्यमारोपयत्तदा मामत्यजदिति विकृतेन—

एवमुक्तस्तु रामेण लक्ष्मणः संयताञ्जलिः।
सीता समक्षं काकुत्स्थमिदं वचनमब्रवीत्॥
परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते।
स्वयं तु रुचिरे देशे क्रियतामिति मां वद॥

इत्युक्तप्रकारेण स्वपारतन्त्र्यं लब्धुं साञ्जलि हस्तेन प्रार्थना कृता, तदा च श्रीसीता पुरुषकारत्वेन पुरस्कृत्यैव स्वापेक्षितस्य प्राप्तत्वात्, आसुरप्रकृतौ जयन्ते काकरूपं गृहीत्वागत्य जननीविषयेऽकृत्ये प्रवृत्ते सति—

कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ।' इति स्वामिना तदुपरि क्रुद्धेन मस्तकं छेत्तुं ब्रह्मास्त्रे प्रयुक्ते सति- स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः । त्रीन् लोकान् सम्परिक्रम्य तमेव शरणं गतः ॥ इत्युक्त प्रकारेण सर्वत्र भ्रमित्वा कुत्राप्या-श्रयाभावेन निराश्रये शरणागते सति श्रीरामायण पद्मपुराणोक्त प्रकारेण श्रीसीता पुरुषकारेण स्वामिना रक्षितत्वाच्च । तथाहि-

स तं निपतितं भूमौ शरण्यः शरणागतम् ।
वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ॥
पुरतः पतितं देवी धरण्यां वायसं तदा ।
तच्छिरः पादयोस्तस्य योजयामास जानकी ।
प्राणसंशयमापन्नं दृष्ट्वा सीताथ वायसम् ।
त्राहि त्राहीति भर्तारमुवाच दयया विभुम् ॥
तमुत्थाप्य करेणाथ कृपापीयूष सागरः ।
ररक्ष रामो गुणवान् वायसं दययैक्षत ॥

विश्लेष दशायाञ्च 'इह सन्तो न वा सन्ति सतो वा नानु-वर्तसे, तथाहि विपरीता ते बुद्धिराचारवर्जिता ॥'

इत्यादिना विपरीतबुद्धिं रावणं स्वामिनश्चरणयोर्घटयितु-मुपायस्य दृष्टत्वात् । रावणवधानन्तरं राक्षसीषु चित्रवधं कर्तु-मुद्यतं हनुमन्तं प्रति- 'पापानां वा शुभानां वा वधार्हाणां प्लव-वङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति । इति तत्कृपो-द्भवनार्हवाक्यमुक्त्वा क्षमापयितृत्वाच्च । अतः उभयोर्दशयो-रस्याः पुरुषकारत्वं ज्ञायते ।

संश्लेषदशायामीश्वरं वशीकरोति। विश्लेषदशायां चेतनं वशीकरोति। अनयोरुभयोरपि दशयोरस्याः श्रीसीतायाः पुरुषकारप्रकारः कीदृश इत्याकाङ्क्षायामाह- संश्लेषदशायामित्यादि।

ईश्वरवशीकरणं नाम- अपराधानेव दृष्ट्वा क्षिपामि न क्षमामि, इति स्थितस्य भगवतः स्थितिं निवर्तयित्वाऽङ्गीकारौन्मुख्यकरणम्। चेतनवशीकरणं नाम- अकृत्यकरणादिशीलस्य भगवद्विमुखस्य तादृशाकारं दूरीकृत्याश्रयणौन्मुख्यकरणम्।

'उभयोर्वशीकरणमुपदेशेन' ईश्वरवशीकरणम् अस्य चेतनस्यापराधान् परिगणय्य भगवान् अमुं निष्कास्य कपाटं पिदधाति चेदस्यान्यः को वाऽश्रयः?

रक्षणसापेक्षतया आगतस्यास्यारक्षणे भवतः सर्वरक्षकत्वम् विफलं स्यात्। अनादिकालात् अस्मदाज्ञातिलंघनम् कृत्वा अस्मत्क्रोधविषयस्यास्यापराधोचित दण्डमकृत्वा तं क्षमित्वाङ्गीकारे कृते शास्त्रमर्यादा नष्टा स्यात्, इति यदि हि भवतोऽभिप्रायः तर्हि अस्य रक्षणमकृत्वाऽपराधानुगुणं नियमने कृतेऽपि भवतः कृपादिगुणानां जीवनप्रकारः कथं स्यात्। कृपादीनां जीवनमेतद्रक्षणेनैव स्यात्।

नियमनाभावे शास्त्रं न जीवति, रक्षणाभावे कृपादयो न जीवन्ति, किं कुर्यामिति न वक्तव्यम्। शास्त्रं विमुखविषयं कृत्वा, कृपादिकमभिमुखविषयं कुर्याच्चेदुभयमपि जीवेत्। अवतारदशायाञ्च 'प्राणसंशयमापन्नं दृष्ट्वा सीताथ वायसम्। त्राहि त्राहीतिभर्तारमुवाच दयया विभुम्।' इति वाचामगोचरं

महापराधं कृतवन्तं काकं प्रति शिरश्च्छेत्तुं प्रयुक्तस्य ब्रह्मास्त्रस्य- कांचन नेत्रच्युतिं कल्पयित्वा भगवान् श्रीरामो ररक्ष, श्रीसीतोपदेशेनेति- पद्मपुराणेऽप्युक्तम्।

'चेतन वशीकरणम्'- सापराध चेतनान् श्रीदेव्युपदिशति- त्वदपराधातिशये दृष्टे तव कुत्रापि गत्यन्तरं नास्ति। ईश्वरश्च निरंकुशस्वतन्त्रत्वात् अपराधान् दृष्ट्वा विभज्य नाशयति- एतदनर्थ परिजिहीर्षायाम् तच्चरणयोः प्र पातं विना मार्गान्तरं नास्ति। अपराध पूर्णं मां स कथमङ्गीकुर्यात्, दण्डयेदेवेति मा भैषीः-आभिमुख्यलेशमात्रेऽपराधान् क्षन्तुं भोग्यत्वेन स्वीकर्तुं चोपयुक्तैर्गुणैः स पुष्कल इति लोके प्रसिद्धः। एवञ्च सति त्वं सुखेन- स्थातुमिच्छसि चेत्तमाश्रय, इति परमहितोपदेशेन श्रीजानकी विमुखचेतनान् वशीकरोति।

दुर्मार्गे प्रवृत्तं पापिष्ठं रावणं प्रति श्रीजानक्या उपदेशो- रामायणे प्रसिद्धः, तथाहि—

मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता।
वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः॥
विदितः स हि धर्मज्ञः शरणागतवत्सलः।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि॥'

इत्यस्मिन् प्रसङ्गे जगज्जननी स्वयमेव रावणमुपदिदेश। रावणः जननीत्वप्रतिपत्तिं विहाय कानिचिदसंगतानि वचनानि जजल्प। तदा श्रीजगज्जननी खिन्ना सती, कोऽयमस्य स्वभावः कथमस्य कोप्युपदेष्टा सेत्स्यतीति,—

'इह सन्तो न वा सन्ति सतो वा नानुवर्तसे।

तथा हि विपरीता ते बुद्धिराचार वर्जिता ।' इत्यादिना विचिन्त्य मातृत्वप्रयुक्तवात्सल्येन दयावती स्वयमेवोपदिशति- मित्रमित्यादिना। रामं शरणं गच्छेत्युक्ते तन्न रावणस्सहेत दुर्मा- नितयेति मित्रमित्याह। किञ्च शरणागतं स्वस्याधीनं मन्यते देवी- देवश्च अतएव रामो वक्ष्यति; 'मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन। दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम्।' इति-इयञ्च तथैवोपदिशति मित्रमिति रामः मित्रं कर्तुं युक्तमित्यर्थः। स्थानं परीप्सता मार्गचौरस्यापि भूमौ पदानि स्थापयित्वा चौर्यं कर्तव्यम्, तवापि यदि स्थानमभीप्सितं तर्हि तमेव भजेत्यर्थः। त्वां संस्थाप्य तवत्समक्षं त्वत्परिवारान् हत्वा- ततस्ते चित्रवधं करिष्यति। तं यदि नेच्छसि तदा प्रपत्तव्यः इत्यर्थः। मत्कृता- पराधेन कथं मामङ्गीकरिष्यति इत्येवं त्वया न चिन्तनीयम्- आनुकूल्यलेशे सति सर्वापराधं विस्मरिष्यति पुरुषधौरेयत्वात्, यतोहि पुरुष–ऋषभः पुरुषधौरेयः इत्यर्थः।

रावणः श्रीरामशरणागतिं न स्वीचकारेति तस्य पापप्राचु- र्यमेव हेतुः, नतु जगज्जनन्या उपदेशन्यूनता। 'उपदेशेनानिवर्तने चेतनं कृपया वशीकरोति। उपदेशेनोभयोरपि कर्मपारतन्त्र्यं- नश्यति। चेतनस्य कर्मपारतन्त्र्यमनाद्यचित् सम्बन्धकार्याविद्या निबन्धनम् – ईश्वरस्य कर्म पारतन्त्र्यं निरंकुश स्वातन्त्र्य कार्य- स्वसंकल्प निबन्धनम्। एतदुभयमप्यनादिसिद्धमपि मातृत्व सम्बन्धेन चेतनस्याभिमततया महिषीत्व सम्बन्धेनेश्वरस्याभिमत- तया अनयोरुभयोरपि हृदयार्द्रं कृत्वा आश्रयाणाङ्गीकाराभिमुखं यथास्यात्तथा क्रियमाणेनोपदेशेन निवृत्तं भवतीत्यत्र न विरोधः।

एतदुपदेशेनैतयोर्निवर्तनाभावेऽनया किं क्रियत इत्यत आह- उपदेशेनेत्यादि- चेतनस्यानिवर्तने मूलं- अनादिकालं यत्किंचिद-वलम्ब्य व्यावृत्ति व्रतम् , इत्युक्तप्रकारेण भगवद्विमुखस्य विषयान्तर प्रवणस्य भ्रमतो दुर्वासनादयो भवन्ति । ईश्वरस्यानिवर्तने हेतुः अपराधानुगुणं-अयं शिक्षणीय इत्यभिसन्धिना स्वस्थितेश्च्युतिं विना स्थातुं निदानं निरंकुश स्वातन्त्र्यम् । एताभ्यां हेतुभ्याम् उभयोरपि सोपदेशेन स्व स्वकर्म पारतन्त्र्यान्निवर्तनाभावे चेतनस्य कृपया वशीकरणं नाम- हन्तास्य दुर्बुद्धिनिर्वृत्ता स्यात् अनुकूला बुद्धिःस्यादिति तद्विषये स्वेन क्रियमाणया परमकृपयाऽस्य पाप बुद्धेर्निवृत्या भगवदाभिमुख्य सम्पादनम् । स्वीयासाधारण-सौन्दर्येणेश्वरस्य वशीकरणप्रकारः श्रीवचनभूषण व्याख्याने द्रष्टव्यः । इत्थम्—

जगज्जनन्याः श्रीजानक्याः पुरुषकारवैभवः वर्णितः । अस्याः रसनीय रहस्यं तु 'मर्त्यावतारस्त्विह मर्त्य शिक्षणम्' इत्यस्य श्लोकस्य व्याख्यानावसरे वर्णयिष्यते ।

सीताभिराममिति विशेषणस्येदमेव तात्पर्यम् ।

**रामम्—**

दाशरथिराममित्यर्थः- 'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति राम पदेनासौ परंब्रह्माभिधीयते ॥' इति रामतापनीया श्रुतिः-अभिधावृत्या रामं परंब्रह्म प्रतिपादयति । 'सत्यं ज्ञानमनन्तं ब्रह्म', 'आनन्दं ब्रह्म' इत्यादि वेदान्त प्रतिपादित सत्य ज्ञानानन्दादयः श्रीरामे पर्यवस्यन्ति । बृहत्वाद्बृंहणत्वाच्च ब्रह्मेति निर्वचनमप्यत्रानुसन्धेयम् । यत् स्वयं बृहत् तथा अन्यानि-

तत्वानि वर्धयति तद्ब्रह्म । व्यापकत्व गुणेनैव ब्रह्मणः सच्चिदानन्दार्थत्वमुपलभ्यते । रामस्य साक्षाद् ब्रह्मस्वरूप वाचकत्वेन एकस्यैव सच्चिदानन्दात्मकस्य परतत्त्वाभिधायकत्वोपपत्तेः । सदात्म परब्रह्मपरमात्मेत्यादि शब्दानां वाच्यविशेषाश्रयणेन सामान्य शब्दत्वोपपत्तेः ।

सामान्य शब्दानां तु सति समानार्थके विशेषोपस्थापके विशेषे पर्यवसानस्य युक्तत्वात् । सर्वशाखा प्रत्ययन्यायेन कारण वाक्यगत शब्दानामेकस्मिन् पर्यवसानस्य युक्तत्वाच्च ।

तत्र तत्रोपनिषत्सु स्व वाच्यस्य मूल कारणत्वाभिधायकैर्ब्रह्मादि शब्दैः सच्चिदानन्दात्मकस्य राम शब्दाभिहितस्य दाशरथेरेव सर्वोत्कृष्टत्वं बोध्यत इत्यवधेयम् ।

तापनीय षष्ठ मन्त्रेणापि श्रीरामस्य परब्रह्मस्वरूपत्वं सुस्पष्टं प्रतिपादितम्—

'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥'

अत्र यच्चिदात्मकं परंब्रह्म रामपदेनाभिधीयते तस्य रामपदात्मकस्य चिन्मयस्य अद्वितीयस्य निष्कलस्य अशरीरिणः उपासकानाम् कार्यार्थम् ब्रह्मणो रूपकल्पनेत्यन्वयोः ज्ञातव्यः चिन्मयविशेषणेन तद्विग्रहस्यापि चिद्रूपत्वमुक्तं भवति ।

'अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः ।'

'रामचन्द्रश्चिदात्मकः । 'ॐ यो वै श्रीरामचन्द्रः स भगवानद्वैत परमानन्दात्मा यत्परब्रह्म भूर्भुवस्वस्तस्मै वै नमो नमः ॥' इत्यादि वक्ष्यमाण मन्त्रेभ्यश्चापि तस्य विग्रहस्य

सच्चिदानन्दात्मकत्व प्रतिपादनात्। स्वरूपतो विग्रहतश्च श्रीरामस्य सच्चिदानन्दमयत्वम् प्रतिपादितं भवति। अन्यथा जीवानामपि स्वरूपतः चिद्रूपतया तत्रापि प्रसक्तया चिन्मयत्वोक्तेर्वैयर्थ्यं स्यात्। अशरीरिण इति पदस्य हेयशरीर विषयत्वेन नेतव्यत्वात्। अर्ध मात्रात्मको रामो ब्रह्मानन्दैक विग्रहः यः सच्चिदानन्दात्मा, विराम महातेजा सच्चिदानन्द विग्रहः, इत्यादिमन्त्रैः तस्य दिव्यमंगलमय विग्रहयुक्तत्वाच्च। अद्वितीयस्येति विशेषणेन कार्य निर्माणे निमित्तान्तरं निषिध्यते-यथा घटादि निर्माणे कुलालादेर्दण्ड चक्रादि सहायकवत्तस्य तथा सहायकं नास्तीत्यर्थः। अथवा अद्वितीयस्य-स्वसमाऽभ्यधिकरहितस्य। 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'नेदं यशो रघुपते सुरयाञ्चयात्त लीला तनोरधिक साम्य विमुक्त धाम्नः। रक्षोवधो जलधिवन्धनमस्त्र पूगैः, किं तस्य शत्रु हनने कपयः सहायाः॥' इति स्मरणाच्च। निष्कलस्य माया संश्लेषरहितस्य। यद्वा निर्गता कला प्राकृतावयवा यस्मात्-यद्वा निर्गता निःसृता कला मूर्तयो यस्मात् स तथा तस्य सर्वावतारनिदानस्येत्यर्थः।

रूपाणां कल्पना रूपकल्पना। ब्रह्मणा उपासकानां कार्यार्थं रूपाणि कल्प्यन्ते अत्ररूपपदं शरीरवाचकम्, कल्पितस्य शरीरस्येत्युत्तरत्र रूपपदस्थाने शरीरपद श्रवणात्, तथा सनत्कुमार संहितान्तर्गत श्रीरामस्तवराजे मत्स्यकूर्म वराहादिरूपधारिणमव्ययमित्यत्र' रूप पदस्य मत्स्यादिशरीरपरत्वावगमाच्च। तथाच-तत्तदुपासकानामभीष्ट सिद्धयर्थं श्रीरामाख्येन परब्रह्मणा स्वनित्य द्विभुजरूपे चतुर्भुजादि रूपाणि कल्प्यन्ते। स्वनित्य विग्रहः

रूपान्तरेण चतुर्भुजादिना वा कल्प्यते । चतुर्भुजादि विग्रहधारण-समर्थः इत्यर्थः । 'क्लृपू सामर्थ्ये', इत्यस्माद्धातोः निष्पन्न कल्पना शब्दः सामर्थ्य बोधकः । स्मृतिरप्याह— 'मणिर्यथा विभागेन नीलपीतादिभिर्युतः । रूप भेदमवाप्नोति ध्यान भेदात्तथाच्युतः ।' यथा वैडुर्यमणिः स्वभावतः शुक्ल वर्णोऽपि नीलपीतादि पुष्पा-दिसान्निध्यात् स्वनित्य रूपं शुक्लं नीलपीतादि रूपेण दर्शयति-तद्वदिहाप्यवगन्तव्यम् ।

श्रीमद्भागवतेऽप्युक्तम्— 'त्वं भाव योग परिभावित हृत्स-रोज आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम् । यद् यद् धिया त उरुगाय विभावयन्ति, तत्तद्वपुः प्रणयसे सदनुग्रहाय । किञ्च-'सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः हानोपादान रहिता नैव प्रकृति-जाः क्वचित् । परमानन्दसंदोहाः ज्ञान मात्राश्च सर्वतः सर्वे सर्वगुणैः पूर्णाः सर्वदोष विवर्जिता ' इति वाराहपुराण वच-नेन समग्रावतारविग्रहाणां प्राकृतशरीर सम्बन्ध राहित्यं सूच्यते । 'निष्कलं निष्क्रियं शान्तम् निरवद्यं निरञ्जनम्' इत्यादि श्रुति-कदम्बः अविद्याप्रत्यनीकस्य ब्रह्मणः कथमपि प्राकृत शरीर सम्बन्ध गन्धं वारयति । 'इति रामपदेनासौ परंब्रह्माभिधीयते' इति श्रुत्या परस्य ब्रह्मणः दिव्यमंगलविग्रहः द्विभुज एवावगम्यते । 'द्विभुजः कुण्डली रत्नमाली धीरो धनुर्धरः' इत्युत्तरतनश्रुतेः । किञ्च 'मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते', इति पुरुष-सूक्ते ब्रह्मणः मुखबाहु पादोरुस्वरूपनिर्णयकृते प्रश्ने-उत्तरितम्-'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः

पद्भ्यां शूद्रोऽजायत ।' इतिकारण वादिनि श्रुत्यन्तरेऽपि 'बाहू' इति द्विभुजत्वश्रवणात् ।

एवमुक्तविषयस्य ब्रह्मशब्दाभिहित वृहत्गुण योगिनः रमणाश्रयस्य रामशब्दाभिहितस्य चतुर्भुजादिरूपाविष्करणमुपासकानां कार्यार्थं भुक्तिमुक्ति प्रदानार्थमित्यन्वयः ॥

तत्रैवोपनिषदि अपराश्च राम नामनिरूक्तयः वर्णिताः यथा-

चिन्मयेऽस्मिन् महाविष्णौ जाते दाशरथे हरौ ।
रघोः कुलेऽखिलं राति राजते यो मही स्थितः ॥
स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः ।

अत्रावमन्वयः—रघोः कुले दशरथविषये महाव्यापकत्वादि-गुणवत्यस्मिन् चिन्मये रामाख्ये परे ब्रह्मणि जाते प्रादुर्भावे सति भक्तानामनुग्रहार्थमितिशेषः । यो महींस्थितस्सन् भक्तानामखिलं राति, यश्च महींस्थितः सन् राजते स विद्वद्भिर्लोकेषु राम इति प्रकटी कृतः इत्यन्वयः । अत्र चिन्मय इति विशेष्य पदम् महा-विष्णुहर्यादि पदानि विशेषणभूतानि, व्यापकत्व दुःख हरत्वादि-गुणद्वारा तद्वाचकत्वेन तयोर्विशेषणत्वं ज्ञेयम् । चिन्मयपदस्यैव-सर्वत्राभ्यासात् । चिन्मय ज्योतिर्मयं स्वप्रकाशं परंतत्वमेवैतदुप-निषत्प्रतिपाद्यम् अतस्तद्वाचकमेव चिन्मयेति पदं विशेष्यम् । नेतरे हरि महाविष्णु पदे । तथाभूते तयोस्तथाभ्यासादर्शनात् । एकस्मिन्वाक्ये वहुपदानां विशेष्यत्वानुपपत्त्या तयोर्व्यापकत्वादि-गुण परतया तद्विशेषणत्वेनापि सार्थकत्वोपपत्तेः । 'चिन्मयस्या-द्वितीयस्य चिन्मयः परमेश्वरः । रामचन्द्रश्चिदात्मकः' इत्यादिषु चिन्मय पदाभ्यासात् तस्य विशेष्यत्वमुपपन्नतरम् ।

प्रथमया श्रुत्या तन्नामधेयप्रकाशनं विनैव चिन्मय वस्तुनः श्रीदशरथविषये आविर्भावो ज्ञापितः एव । तदुपबृंहणपरैः शिष्टैरपि तद्विशेषनामप्रकाशनं विनैव परतत्त्व पर्यवसित सामान्यशब्दैः तदाविर्भावित्वज्ञापनात् ।

'सूच्चस्थे ग्रह पञ्चके सुरगुरौ सेन्दौ नवम्यांतिथौ, लग्ने कर्कटके पुनर्वसु युते मेषंगते पूषणि । निर्दग्धं निखिलाः पलास समिधो मेध्यपादयोध्याऽरणे राविर्भूतमभूतपूर्वविभवं यत्किञ्चदेकमहः । वेद वेद्ये परे पुंसि जाते दशरथात्मजे' इति च । सासि तूणधनुर्बाण पाणिं नवतंचरान्तकम् । स्व लीलया जगत्त्रातुमाविर्भूतमजंविभुमिति च । चैत्रमासे नवम्यां तु शुक्लपक्षे रघूद्वह । प्रादुरासीत्परं ब्रह्म परं ब्रह्मैव केवलम्' इति चेत्यादिवाक्य गतैरेकमहः परं पुंस अज विभवादिभिः सामान्य शब्दैस्तदाविर्भावित्वज्ञापनात् ।

किञ्च- 'स्वभूर्ज्योतिर्मयोऽनन्त रूपी स्वेनैव भासते
जीवत्वेनेदमों यस्य सृष्टि स्थितिलयस्य च ।
कारणत्वेन चिच्छक्त्या रजः सत्व तमोगुणैः॥'

स्वभूः स्वतः सिद्धः अकारणक इत्यर्थः अनेन श्रीराम तन्मन्त्रयोरन्य कार्यत्व व्युदासः । तेन वहूनां मूल कारणत्वासम्भवेन तयोः सर्वकारणत्वमर्थं सिद्धम् ॥ ज्योतिर्मयः— प्रकाशमय इति, तस्य स्वभिन्न प्रकाशकत्वमर्थं सिद्धम् । 'सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः'

इति वाल्मीकिवचनेन सकल लोक प्रकाशकस्य सूर्यस्यापि प्रकाशकः। अग्नेरग्निः- अग्नेर्वस्तु परिपाकदाहकत्वादिकं तत्संकल्पाधीनमिति। प्रभोः प्रभुः- ब्रह्मरुद्रादेः सृष्ट्यादिसामर्थ्यप्रदानेन निर्वाहकः इति वाल्मीकिवचनमत्रानुसन्धेयम्। 'तमेवभान्तमनुभाति सर्वम्. यदादित्यगतं तेजः, अहं वैश्वानरो भूत्वा' इत्यादि श्रुतिस्मृतिवचनैः भगवतः सर्व कारणत्वं सुप्रसिद्धम्।

अनन्तरूपीति—अनन्तं अपरिच्छिन्नं द्विभुजादिमद्रूपं विद्यते यस्य स तथोक्तः, विभिन्नदेशस्थ भावुकानां हृदयेषु युगपत्स्वविग्रहेणैवाविर्भावात्- श्रीरामः अनन्त रूपी उच्यते। अथवा अनन्तानि अपरिमितानि रूपाणि विद्यन्ते यस्य तथोक्तः। नील पीतादिपुष्प सन्निधानेन नीलपीतादि रूपेण दृश्यमानवैडूर्य मणिरिवायमपि विलक्षणशक्तिसम्पन्नस्तत्तदुपासकभावनानुसारेण तत्तद्रूपेण दृश्यत इत्यर्थः। 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पनेति' श्रुतेः। 'यो वै मत्स्यकूर्माद्यवताराः' इत्यादि वक्ष्यमाण चरममन्त्रेभ्यश्च तस्य सर्वरूपित्वं सुस्पष्टम्।

'मत्स्यकूर्मवराहादि रूपधारिणमव्ययम्'

इति सनत्कुमारसंहितोक्तवचनेनापि तस्य सर्वरूपित्वमुपपन्नतरम्। 'महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः। रक्षां विधास्यन्भूतानां विष्णुत्वमुपजग्मिवान् भवान्नारायणो देवः, एकशृङ्गवराहस्त्वमित्यादि वाल्मीकिवचनस्मरणाच्च।

स्वेनैव भासते— नन्वनेकरूपधारिणाम् सौभर्यादीनामपि कारणान्तरं श्रूयते, ज्योतिरूपस्यापि सूर्यादेर्भासकान्तरं श्रूयते, इत्याशंक्य प्रथमां शङ्कां स्वभूरित्यनेन निरस्तां मत्वा स्वे-

नैव भासते इत्यनेन द्वितीयां शङ्कां निरस्यति । यथा स कारणान्तररहितोऽस्ति तथैव प्रकाशकान्तर रहितोप्यस्तीति भावः । बहूनां स्वप्रकाशकत्वानुपपत्तेस्तस्य सर्वप्रकाशकत्वमर्थं सिद्धम् । एतदेवाभिप्रेत्योक्तम् —

'नारायणादि नामानि कीर्तितानि बहून्यपि,
आत्मा तु तेषां सर्वेषां रामनाम प्रकाशकः ।
विष्णोरेकैक नामैव सर्ववेदाधिक मतम् ।
तादृङ् नाम सहस्रैस्तु रामनाम समं मतम् ॥' इत्यादि

जीवत्वेनेदमों यस्य- यस्य परमात्मनः श्रीरामस्य जीवत्वेन ओम्, ओङ्कारः, मन्त्र पक्षे तु यस्य वह्निबीजस्य जीवत्वेन स्फोटकत्वेनेदं, सर्ववेद सर्वमन्त्रात्मकं ओङ्काराक्षरं भासते । वह्नि बीजमेव वर्णविश्लेषादिरूपेण ओङ्काररूपत्वमापद्य तद्रूपेण भासते । वस्तुतस्तु न तद्भिन्नः ओङ्कारोऽस्तीत्यर्थः । इत्योमितीत्युत्तर तापिनी श्रुतेः ।

रामनाम्नः समुत्पन्नः प्रणवो मोक्षदायकः इति स्मरणाच्च । साम्प्रतं ततः सद्वारकम् सष्ट्यादिकमाह— सृष्टीति रजः सत्व तमो गुणैः- रजः सत्व तमो गुणैर्विशिष्टया चिच्छक्त्या सृष्टिस्थितिलयस्य कारणत्वेन रामोऽवतिष्ठत इति -

'यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः
तथैव राम बीजस्थं जगदेतच्चराचरम् ।
रेफारूढा मूर्तयस्युः शक्तयस्तिस्र एव ॥' इति

यथैव प्राकृतो महाद्रुमः बहुफलशाखापत्रादिमान् वट बीजस्थो वृक्षस्तथैवैतच्चराचरं जगत् रामबीजस्थम् । रामाभिन्नं

रां बीजं जगदुपादानम् जगदाधारमिति फलितोऽर्थः। तदेवं श्रीरामस्य जगत्सृष्ट्यादिकारणत्व दर्शितम्।

यथा कश्चित्क्षेत्रे आवपति, सिञ्चति कृन्तति, चायमस्य क्षेत्रस्य स्वामीत्यपरेण निश्चीयते तथैव जगत्सृष्ट्यादि व्यापारैरयं जगच्छेषीति निश्चेतव्यत्वेन जगत्परमात्मनोः शेष शेषीभाव सम्बन्धलाभात् कृत्स्नं चराचरं जगत् श्रीरामस्यैव शेषभूतम् नान्यस्य स्वस्य वेति बीजस्य फलितोऽर्थः।

किञ्च रेफो वर्णस्तमारूढास्तदुपश्लिष्टा यथा वृक्षारूढा वानराः वृक्षाश्रितास्तथैव रेफारूढत्वेन तदाश्रिताः मूर्तयो ब्रह्मविष्णुरुद्ररूपाः मूर्तयस्तच्छक्तयश्च रेफारूढास्तदाश्रया इत्यर्थः। 'सीता रामौ तन्मयावत्र पूज्यौ जातान्याभ्यां भुवनानि द्विसप्तेत्यादि' मन्त्रेण रेफमयस्य सीताविशिष्टश्रीरामस्य जगत् कारणत्वं प्रतिपादितम्।

'ॐ यो वै श्रीरामचन्द्रः स भगवानद्वैत परमानन्दात्मा यत्परंब्रह्मेत्यादि' सप्त चत्वारिंशन्मन्त्रैः श्रीरामस्य सर्वावतारित्वं सर्वकारणत्वञ्च प्रतिपादितम्। एवञ्च, उपक्रमोपसंहारादिषड्विधतात्पर्यनिर्णायकवाक्यैः श्रीरामस्य परम कारणत्वं सर्वावतारित्वञ्च प्राचीकशत् रामतापनीया श्रुतिः। वेदोपबृंहणभूत श्रीमद्रामायणेनापि श्रीराम एव वेदान्तैकवेद्यः, परात्परपूर्णतमपुरुषोत्तमः इति महर्षिणा प्रतिपादितः।

'प्रायेण पूर्वभागार्थो धर्मशास्त्रेण कथ्यते।
इतिहासपुराणाभ्यां वेदान्तार्थः प्रकाश्यते॥

इति वचनेन श्रीरामायणस्य वेदान्तार्थ प्रकाशकत्वं सुविदितचरमेव।

'वेदवेद्ये परे पुंसि जाते दशरथात्मजे
वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना।

इति वचनेनापि रामायणस्य वेदावतारत्वमुपपन्नतरम्।

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये'

इत्युक्त षड्विध तात्पर्य निर्णायकवाक्यैः समग्र श्रीरामायणस्य जगज्जन्मादिकारणभूते परब्रह्मणि श्रीरामे तात्पर्यमिति सुप्रथितचरमेव विपश्चिदग्रेसराणाम्। तथाहि—उपक्रमे तावत् तपःस्वाध्यायेत्यादिना श्रीरामतत्वजिज्ञासा प्रवर्तिता। 'आचार्यवान् पुरुषो वेद, प्राप्य वरान्निबोधत', तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः।

'तस्माद्गुरूं प्रपद्येत जिज्ञासुःश्रेय उत्तमम्।
शाब्दे परे च निष्णातं ब्रह्मण्युपसमाश्रयम्॥'

इत्यादि श्रुतिस्मृतिवाक्यकदम्बेन गुरुपसदनानन्तरमेव तत्वसाक्षात्कार इति निश्चीयते। श्रीमद्रामायणेऽपि श्रोत्रिय ब्रह्मनिष्ठादि समस्ताचार्यलक्षणसम्पन्नं नारदमुपससार- शमदमादिसाधनसम्पन्नः जिज्ञासुभूतो महर्षिर्वाल्मीकिः—

तपः स्वाध्याय निरतं तपस्वी वाग्विदां वरम्
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्॥

अत्र प्रच्छेर्द्विकर्मत्वात् नारदातिरिक्तं कर्म ब्रह्मोपलभ्यते। तथाहि— महर्षिर्वाल्मीकिः नारदं ब्रह्म पप्रच्छेति फलितोऽर्थः।

अथातो ब्रह्म जिज्ञासेतिवदत्रापि श्रीराम ब्रह्मजिज्ञासा मूलकोऽयं गुरू शिष्यसमागमः।

'कोन्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्' इत्यादिना वेदान्तोदितनिखिलकल्याणगुणगणसम्पन्नः श्रीरामः आहोस्वित् ब्रह्मादिष्वन्यतमः, इति वाल्मीकिना पृष्टे-- 'इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः', इत्यादिना श्रीराम एव वेदान्तोदितसकलगुणसम्पन्न इति नारदेनोक्तम्। अनेनोपक्रमे वेदान्तवेद्यः श्रीराम एवेति महर्षिणा प्रत्यपादि। उपसंहारे च-- सर्वलोक पितामहः ब्रह्मा प्राह—

'संक्षिप्य हि पुरा लोकान् मायया स्वयमेव हि।
महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः॥
भोगवन्तं ततो नागमनन्तमुदकेशयम्।
मायया जनयित्वा त्वं द्वौ च सत्त्वौ महाबलौ॥
मधुं च कैटभं चैव ययोरस्थिचयैर्वृता।
इयं पर्वत सम्बाधा मेदिनी चाभवन्मही॥'

पुरा सृष्टिकालात् पूर्वं मायया स्वसामर्थ्येन विचित्रशक्त्या च लोकान् चराचरात्मकाः प्रजाः स्वयमेव संक्षिप्य--संहृत्य महार्णवे जलमये जाते तत्राप्सु--उदके शयानः पूर्वं प्रथमतः मां ब्रह्माणं त्वं अजीजनः। अत्र स्वयमेवेत्यनेन स्वाभाविकत्वं शक्तिमत्वं द्योतयति। त्वमेव महार्णवशायी,त्वमेव मां पूर्वं सृष्टवानसि, अनेन श्रीरामस्य जगत्कर्तृत्व संहर्तृत्वादिगुणाः प्रतिपादिताः। तदनन्तरमनन्तं नागं विचित्रशक्त्या जनयित्वा मधुकैटभनामानौ द्वौ च महाबलौ सत्वौ त्वं अजीजनः। ययोरस्थि-

चयैर्वृता इयं मही पर्वतसम्बाधा सती मेदिनी तन्मेदोयुक्ता चाभवत् तत्र मधुः जलोत्पन्न मकरादिवत् मेदः प्रधानः, कैटभस्तु कमठशुक्त्यादिवदस्थिप्रधानः, एवञ्च अस्थिचयैः शिला पर्वत स्थिति हेतुभूता मेदोमयत्वाद् वृक्षलताद्युत्पत्ति हेतुर्भूप्रदेशाच्चाभूदित्यर्थः संक्षिप्य हि पुरेति वचनेन--यो वै ब्रह्माणं विदधाति पूर्वं इत्यादि श्रुत्यर्थः प्रतिपादितः--

'पद्मे दिव्येऽर्क सङ्काशे नाभ्यामुत्पाद्य मामपि ।
प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम् ॥
सोऽहं सन्न्यस्त भारो हि त्वामुपासे जगत्पतिम् ।
रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् ॥
ततस्त्वमपि दुर्धर्षात्तस्माद् भावात् सनातनात् ।
रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥
अदित्यां वीर्यवान् पुत्रो भ्रातॄणां वीर्यवर्धनः ।
समुत्पन्नेषु कृत्येषु तेषां साह्याय कल्पसे ॥
स त्वं वित्रास्यमानासु प्रजासु जगतां वर ।
रावणस्य वधाकांक्षी मानुषेषु मनोऽदधाः ॥

'मां त्वं पूर्वमजीजनः' इत्युक्तश्लोकं विवृणोति पद्म—इत्यादिना--अर्कसंकाशे सवितृसमे दिव्ये पद्मे नाभ्यां वर्तमाने पद्मे नाभिकमले मामुत्पाद्य, मयि प्राजापत्यं-प्रजापतित्वं निवेशितम्, मह्यं प्रजापतित्व पदं दत्तवानसीत्यर्थः । सोऽहमिति-- त्वयि सन्न्यस्तभारः अहं त्वामुपास्से निरन्तरं चिन्तयामि, मत्सृष्टेषु भूतेषु रक्षां त्वमेव विधत्स्व यतोहि भवान् मम तेजस्करः। यद्यपि भगवदाज्ञया ब्रह्मा सृष्टिकार्यं कर्तुं शक्नोति,संहारकार्यं च शिवः

कर्तुं शक्नोति, किन्तु भगवन्तमन्तरा रक्षणकार्यं कर्तुं कोऽपि न शक्नोति-इति रक्षार्थं भगवन्तमेव प्रार्थितवान् ब्रह्मा।

ततस्त्वमपि--दुर्धर्षादित्यनेन श्रीरामस्य सर्वकारणभूत-परवासुदेवस्वरूपं निरूपयति ततः मत्कृतभारसमर्पणेन, दुर्धर्षात् दुर्ज्ञेयात्, सनातनात् नित्यात्, भावात् परवासुदेवस्वभावात् सर्वभूतानां रक्षार्थं विष्णुत्वमुपजग्मिवान्--प्राप्तवान्। यद्वा सनातनात् तस्मात् वासुदेवविग्रहात्, अदित्यां विष्णुत्वमुप-जग्मिवानित्यर्थः। परवासुदेवस्त्वं प्रथमं ब्रह्मरुद्रमध्ये आदि-विष्णुतयाऽवतीर्णोसीत्यर्थ इत्याह श्रीगोविन्दराजः।

पुराणकल्पाद् रामायणकल्पो भिन्नः प्रतीयते। पुराणेषु सर्वत्र विष्णोस्सकाशादेवावताराः भवन्ति, श्रीरामायणकल्पे तु साक्षात्परवासुदेव एव श्रीरामो बभूव। श्रीराम एव विष्णुरूपं स्वीचकार। 'विष्णुत्वमुपजग्मिवानिति' वाल्मीकि वचन-मत्रानुसन्धेयम्। पुराणकल्पे परधामगमनसमये श्रीरामः विष्णु-रूपं धत्ते, भरतादि भ्रातरः शङ्खचक्रादयो भवन्ति। श्रीरामा-यणकल्पे तु 'विवेश वैष्णवं तेजः सशरीरः सहानुजः' इत्यनेन श्रीरामः सानुजः सशरीरः साकेतं जगामेति महद् वैशिष्टचम्। परवासुदेव एव श्रीरामरूपेणावततारेति-पूर्वाचार्या अपि स्वी-चक्रुः। अथ तस्मादुपेन्द्रावतारमाह--अदित्यामिति।

भ्रातृणां इन्द्रादीनां वीर्यवर्धनः सन् लोकस्य कृत्येषु रक्षण-कार्येषूत्पन्नेषु साह्याय तत्सम्पादनयोग्यत्वाय कल्पसे। ततो

लोक संरक्षणार्थमुपेन्द्रोऽभूरित्यर्थः । एवं महाविष्णुरूपादुपेन्द्रावतारमुक्त्वा पुरस्तात् रामावतारमाह--सत्वमिति---

हे जगताम्बर ! प्रजासु वित्रासमानासु सतीषु रावणस्य वधाकाङ्क्षी सन् मानुषेषु मनोऽदधाः, भवान् मनुष्यरूपेण अवततार। इत्याद्युपसंहार वाक्येन सर्वजगतकारणत्व, प्रजापति जनकत्व, सर्वावतारित्वादि प्रतिपादनेन श्रीरामस्य सर्वपारम्यमुक्तम् । 'ततस्त्वमपि दुर्धर्षादिति' श्लोके, वर्तते कश्चन दुर्धर्षः सनातनो भावः, यस्मात् प्रजापति प्रार्थनया सर्वभूतानां रक्षार्थं विष्णुत्वं प्राप्तवान् श्रीरामः । त्रिदेव कारणभूत परवासुदेव श्रीराम स्वरूपादेव विष्णुरूपं स्वीकृतवानिति गोविन्दराजः व्याचख्यौ। अत्र श्रीरामस्य परवासुदेवस्वरूप स्वीकारेण श्रीनारायणादि कारणत्वमपि प्रतिपादितं भवति,सन्दिग्धं तु वाक्यशेषादिति मीमांसकनयेन उपसंहार वाक्यस्य बलीयस्त्वं सर्वैरभ्युपगम्यते।

किञ्च उपक्रमोपसंहारवाक्ययोरेकवाक्यता सर्वसम्मता, उपसंहारवाक्ये श्रीरामस्य सर्वजगत्कारणत्व, प्रजापतिजनकत्व, परवासुदेवस्वरूपत्वादिकं प्रत्यपादि । एतेन वेदावतार श्रीमद्वाल्मीकिरामायण प्रतिपाद्यो देवता श्रीराम एवेति निश्चीयते। समग्र श्रीरामायणे अभ्यासश्चापि श्रीरामस्यैव दृश्यते, तथाहि वालकाण्डे-एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः। शंखचक्रगदापाणिः-पीतवासा जगत्पतिः । इत्यनेन भगवतः जगत्कारणत्वं प्रदर्शितम् । परमकारुणिको भगवान्-परित्राणाय साधूनामित्युक्तरीत्या साधुपरित्राण दुष्कृतविनाश धर्मसंस्थापनादि कृते स्वाराधक श्रीदशरथमनोरथ परिपूर्णाय चावतितीर्षुराजगाम ।

**एतस्मिन्नन्तरे—** तेषां रक्षापेक्षावसरे, अनेन चिरमस्यावसर प्रतीक्षत्वं गम्यते, 'सर्वज्ञोऽपि हि देवेशस्सदा कारुणिकोऽपि सन्। संसारतन्त्र वाहित्वाद्रक्षापेक्षां प्रतीक्षते। **विष्णुः—** सर्वान्तिर्यामितया व्याप्य वर्तमानः। **महाद्युतिः—**रक्षणावकाशलाभसमुदितहर्षप्रकर्षकृतकान्तिविशेष युक्तः। अनेनेतः पूर्वं संसारिजन दुर्दशावलोकनेन दूयमानमानसत्वमुक्तम्, 'स एकाकी न रमेत',, इति श्रुतेः।

**शंखचक्रगदापाणिः—** आश्रितानां रक्षणापेक्षायां रक्षणोपकरण ग्रहणाय विलम्बो माभूदिति सर्वदा तैरुपेतः।

तनिश्लोकीकृता तु— शंखचक्रगदापाणिः, नैनं सूर्यः प्रतपति, इत्याद्युक्तरीत्या स्वस्व व्यापारेष्वपि संकोचवन्तस्स्वपदभ्रंशशंकिनो देवास्सभासु निःशङ्कं किल रावणवधोपायमालोचयन्ति। तदानीमेव चेद्रावणस्तत्रागच्छति तदा सकल देवशिरश्छेदकः स्यात्, सकललोक शरण्यत्व हानिस्स्वस्य भवेदिति ततः पूर्वमेवायुधादि सकल युद्ध परिकर युक्त एवागत इति व्याख्यातम्।

**पीतवासा—**आश्रितरक्षण त्वरया बद्धकक्षः। जगत्पतिः-उक्तसकलविशेष हेतुभूत स्वस्वामिभाव सम्बन्धवान्। **उपयातः—** वैकुण्ठात् श्रीदशरथयज्ञवाटमाजगामेति श्रीगोविन्दराजः। तत उत्तरत्र देवाः—'त्वं गतिः परमा देव सर्वेषां नः परन्तप', इत्याहुः। तेन परत्वासाधारणं सर्वशरण्यमुक्तम्। तत उत्तरत्र—ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः। स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम्' इति सर्वोपास्यत्वमुक्तम्। ततो विश्वामित्रः-- अहं वेद्मि महात्मानं रामं सत्यपराक्रमम्। वसिष्ठोऽपि महातेजा

ये चेमे तपसि स्थिताः । इति 'वेदाहमेतं पुरुषं महान्तम् । तमेतं-वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन, दानेन, तपसानाशकेन' इत्यादि श्रुत्युक्तरीत्या महापुरुषत्वं तपोबलं विना तस्य दुर्ज्ञेयत्वञ्चाह । श्रीसीताविवाहे वसिष्ठोऽपि— 'अव्यक्त प्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः । तस्मान्मरीचिः संजज्ञे मरीचेः काश्यपः सुतः', इत्यनेन श्रीरामस्य सर्वमूलकारणत्वं प्राचीकशत् । परशुरामोऽपि—'अक्षयं मधुहन्तारं जानामि त्वां सुरोत्तमम् । धनुषोऽस्य परामर्शात् स्वस्ति तेऽस्तु परन्तप', इत्यनेन मधुसूदनं प्रतिपादितवान् । अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा,- इत्यनेन सर्वाधिकत्वं च निर्दिष्टम् । अयोध्याकाण्डे—

'स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः ।
अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥'

इत्यनेन तस्य सनातनत्वमवतारप्रयुक्तसौलभ्यं चोपवर्णितम् । अरण्यकाण्डे-मारीचेन—'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा', इत्यनेन श्रीरामस्य परिच्छेदातीत महिमत्वमुक्तम् । किष्किन्धाकाण्डे तारावचनम्— 'त्वमप्रमेयश्च दुरासदश्च जितेन्द्रियश्चोत्तमधार्मिकश्च । अक्षय्यकीर्तिश्च विचक्षणश्च क्षितिक्षमावान् क्षतजोपमाक्षः ॥ निवासवृक्षः साधूनामापन्नानां परागतिः । आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् ॥ ज्ञान विज्ञान सम्पन्नो निदेशे निरतः पितुः । धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ।' इत्यनेन च ज्ञानानन्दादि समस्त कल्याणगुणाकरत्वमुक्तम् । सुन्दरकाण्डे—'ब्रह्मास्वयम्भूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा । इन्द्रो महेन्द्रस्सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम्' ।

'सर्वान् लोकान् सुसंहृत्य सभूतान् सचराचरान् ।
पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ।'

इत्यादि वाक्यैरतस्य सर्वसंहर्तृत्वं द्योतितम् । युद्धकाण्डे—मन्दोदरी प्राह— 'व्यक्तमेष महायोगी परमात्मा सनातनः । अनादिमध्यनिधनो महतः परमो महान् ॥ तमसः परमो धाता-शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः। मानुषं वपुरास्थाय विष्णुः सत्यपराक्रमः। सर्वैः परिवृतो-देवैर्वानरत्वमुपागतैः ॥ सर्वलोकेश्वरः साक्षाल्लोकानां हित-काम्यया । स राक्षस परीवारं हतवांस्त्वां महाद्युतिः ॥'
अत्र हिरण्यगर्भ शिवेन्द्रादिशब्दाः सद्ब्रह्मात्मशब्दवत् श्रीराम-पराः एवेत्याशयः । चिद्रूपिण्याः श्रीसीतायाः परमैश्वर्यं प्रतिपाद-यन्ती मन्दोदरी प्राह—

'अरुन्धत्या विशिष्टां तां रोहिण्याश्चापि दुर्मते ।
सीतां धर्षयता मान्यां त्वया ह्यसदृशं कृतम् ॥
वसुधायाश्च वसुधां श्रियः श्रीं भर्तृवत्सलाम् ।
सीतां सर्वानवद्याङ्गीमरण्ये विजने शुभाम् ॥
आनयित्वा तु तां दीनां छद्मनात्मस्वदूषण ।
पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो ॥

उत्तरत्र ब्रह्मा प्राह— भवान्नारायणो देवः श्रीमांचक्रायुधो विभुः ।
एक शृङ्गो वराहस्त्वं भूतभव्य सपत्नजित् ।
अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघव ॥
लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ।
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ॥

अजितः खड्गधृग्विष्णुः कृष्णश्चैव बृहद्बलः ।
सेनानीर्ग्रामणीश्च त्वं बुद्धिः सत्वं क्षमा दमः ॥
प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः ।
इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् ॥
शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः ।
सहस्रशृङ्गो वेदात्मा शतजिह्वो महर्षभः ॥
त्वं त्रयाणां हि लोकानामादिकर्ता स्वयम्प्रभुः ।
सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः ॥
त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः परन्तपः ।
प्रभवं निधनं वा ते न विदुः को भवानिति ॥
सीता लक्ष्मीर्भवान् विष्णुर्देवः कृष्णः प्रजापति ।
वधार्थं रावणस्येह प्रविष्टो मानुषीं तनूम् ॥

अनेन ब्रह्मस्तवेन लोकपितामहेन श्रीरामस्य विष्णुनारायण-वामनकृष्णादि शब्दवाच्यत्वमुक्तम् ।

एवञ्च समग्र श्रीरामायणे अभ्यासेन श्रीराम परत्वमेव वर्णितम् । अपूर्वता च प्रमाणान्तराप्राप्तिः, नहि परतत्त्वस्य श्रीरामस्य परब्रह्मत्वं प्रमाणान्तरादवगन्तुं शक्यम् । फलञ्च भगवत्सालोक्यादि प्राप्तिरित्यन्ते महर्षिणा सूपपादितम् ।

अथ विष्णुर्महातेजाः पितामहमुवाच ह ।
एषां लोकं जनौघानां दातुमर्हसि सुव्रत ॥
इमे हि सर्वे स्नेहान्मामनुयाता मनस्विनः ।
भक्ता हि भजितव्याश्च त्यक्तात्मानश्च मत्कृते ॥

तच्छ्रुत्वा विष्णुवचनं ब्रह्मा लोकगुरुः प्रभुः।
लोकान् सान्तानिकान्नाम यास्यन्तीमे समागताः॥
यच्च तिर्यग्गतं किञ्चित्त्वामेवमनुचिन्तयत्।
प्राणांस्त्यक्ष्यति भक्त्या वै तत्सन्ताने निवत्स्यति॥
सर्वैर्ब्रह्म गुणैर्युक्ते ब्रह्मलोकादनन्तरे।
तथोक्तवति देवेशे गोप्रतारमुपागताः॥
भेजिरे सरयूं सर्वे हर्षपूर्णाश्रुविक्लवाः।
अवगाह्य जलं यो यः प्राणीह्यासीत् प्रहृष्टवत्॥
मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत।
तिर्यग्योनिगतानां च शतानि सरयू जलम्॥
सम्प्राप्य त्रिदिवं जग्मुः प्रभासुरवपूंषि च।
दिव्या दिव्येन वपुषा देवा दीप्ता इवाभवन्॥
गत्वा तु सरयूतोयं स्थावराणि चराणि च।
प्राप्य तत्तोयविक्लेदं देवलोकमुपागमन्॥
तस्मिन्नपि समापन्ना ऋक्षवानरराक्षसाः।
तेऽपि स्वर्गं प्रविविशुर्देहान्निक्षिप्य चाम्भसि॥
ततः समागतान् सर्वान् स्थाप्य लोकगुरुर्दिवि।
जगाम त्रिदशैः सार्धं सदा हृष्टैर्दिवं महत्॥

वेदान्तसारे श्रीमद्भागवतेऽपि भगवता श्रीरामेण भक्तेभ्यः सालोक्यं प्रदत्तमिति व्यासो वर्णयामास।

स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा।
कौसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः॥

सुरोऽसुरो वाप्यथ वानरो नरः सर्वात्मना यः सुकृतज्ञमुत्तमम्।
भजेत रामं मनुजाकृतिं हरिं य उत्तराननयत्कोसलान्दिवम्॥

अर्थवादोपपत्ती च बालकाण्डे दर्शिते—

इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिविश्रुते।
दृढ़े वलवती मुख्ये सुकृते विश्वकर्मणा॥

इत्यादिनाऽर्थवादमुक्त्वा— 'जृम्भितं तद्धनुर्दृष्ट्वा शैवं-विष्णु पराक्रमैः। अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा'॥ इत्यादिना ब्रह्मप्रमुखैस्सर्षिगणैर्देवैर्मीमांसापूर्वकं विष्णुरुद्रयोर्मध्ये विष्णोराधिक्यनिर्णयोक्तेरुपपत्तिरुक्ता। एवमुपक्रमादि षड्विध-तात्पर्य निर्णायक लिङ्गैर्वेदान्तवेद्यं परतत्वं श्रीराम एवेति वेदोप-बृंहणभूतेन श्रीरामायणेन महर्षिणा प्रत्यपादि।

श्रीसनत्कुमारसंहितान्तर्गत श्रीरामस्तवराजे श्रीयुधिष्ठिरः श्रीव्यासं पप्रच्छ—'भगवन्योगिनांश्रेष्ठ! सर्वशास्त्र विशारद।

किं तत्वं किं परं जाप्यं किं ध्यानं मुक्तिसाधनम्।
श्रोतु मिच्छामि तत्सर्वं ब्रूहि मे मुनिसत्तम!॥'

श्रीव्यास उवाच—'धर्मपुत्र महाभाग शृणु वक्ष्यामि तत्वतः

यत्परं यद्गुणातीतं यज्ज्योतिरमलं शिवम्।
तदेव परमं तत्वं कैवल्यपदकारणम्॥
श्रीरामेति परं जाप्यं तारकं ब्रह्म संज्ञकम्।
ब्रह्महत्यादि पापघ्नमिति वेद विदो विदुः॥'

अत्र परगुणातीतादिविशेषणविशिष्टः श्रीराम एव परंतत्व-मुवाच श्रीव्यासः। परं जाप्यं तारकमेव जगाद। तदेवं श्रीयुद्धिष्ठिर

प्रश्न द्वयस्योत्तरमुक्त्वा—अथ किं ध्यानं मुक्तिसाधनमिति तृतीय प्रश्नस्योत्तरमाह—

अयोध्यानगरे रम्ये रत्नमण्डप मध्यगे।
स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम् ॥
तन्मध्येऽष्टदलं पद्मं नानारत्नैश्च वेष्टितम्।
स्मरेन्मध्ये दाशरथिं सहस्रादित्यतेजसम् ॥
पितुरङ्कगतं राममिन्द्रनीलमणिप्रभम्।
कोमलाङ्गं विशालाक्षं विद्युद्वर्णाम्बरावृतम् ॥

इत्यादिना वात्सल्यरसाविष्टचेतसां भक्तानां कृते वालरूपस्य श्रीरामस्य ध्यानमुक्तम्।

युगलोपासकानां ध्यानं तु—वैदेहीसहितं सुरद्रुमतले हैमेमहामण्डपे,मध्ये पुष्पकमासने मणिमये वीरासने संस्थितम्। अग्रे वाचयति प्रभञ्जनसुते तत्वं मुनिभ्यः परं व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ इत्युत्तरत्र चोक्तम्। एवञ्च समग्र श्रीरामस्तवराजे स्वसमाभ्यधिकशून्यं श्रीसीतारामपरत्वं प्रतिपादितम्। व्याख्यातञ्च स्व स्व भाष्ये गालवाश्रमस्थ श्रीहर्य्याचार्यस्वामिभिस्तथाऽयोध्यास्थ श्रीहरिदास स्वामिभिः। भाष्यद्वयेऽपि श्रीसीतारामपरत्वं रसनीयम् रसविदग्रेसरैः।

किम्पुरुषे वर्षे भगवन्तमादिपुरुषं लक्ष्मणाग्रजं सीताभिरामं राममिति प्रथम गद्यस्थ श्रीरामशब्दस्य व्याख्यानं व्याख्यातम्। शेष गद्यांशः व्याख्यायतेः—

**तच्चरणसन्निकर्षाभिरतः**—तस्य श्रीरामस्य यौ चरणौ तयोः सन्निकर्षः सान्निध्यं भजनमितियावत् तस्मिन् अभिरतः

आसक्तः। एतेन उपासनाकाले तस्य श्रीसीतारामपादारविन्दयोः सम्यक् साक्षात्कारो जातः इति ध्वनितम्,अतएव श्रीरामपादारविन्दमकरन्दसौगन्ध्यलुब्ध अभितो रतः सम्यगासक्तः उक्तः।

**परमभागवतः**—एकादशे राज्ञा विदेहेन पृष्टः नवयोगेश्वरः भागवतलक्षणमित्थं व्याचष्टे—

**राजोवाच—**

'अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम्।
यथा चरति यद्ब्रूते यैर्लिङ्गैर्भगवत्प्रियः॥

**हरिरुवाच—**

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥
ईश्वरे तदधीनेषु वालिशेषु द्विषत्सु च।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः॥
अर्चायामेव हरये पूजां यः श्रद्धयेहते।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः॥
गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति।
विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः॥
देहेन्द्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः।
संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः॥
न काम कर्म बीजानां यस्य चेतसि सम्भवः।
वासुदेवैकनिलयः स वै भागवतोत्तमः॥
न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः।
सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः॥

न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा।
सर्वभूतसमः शान्तः स वै भागवतोत्तमः॥

त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात्। न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः॥ भगवत उरुविक्रमाङ्घ्रिशाखा नखमणिचन्द्रिकया निरस्ततापे। हृदिकथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः॥ विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः। प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान भक्तः॥'

'स भक्तः प्राकृतः स्मृतः' इत्यत्र प्राकृतः प्रारम्भः अधुनैव प्रारम्भभक्तिः शनैरुत्तमो भविष्यतीत्यर्थः—इति श्रीस्वामिचरणाः। 'यद्धर्मो' यस्मिन् धर्मे परिनिष्ठितः, यादृशो यत् स्वभावः, यथा चरति वर्तते, यद्ब्रूते—वदति, 'सर्वभूतेषु यः पश्ये' दित्यारभ्य 'स भक्तः प्राकृतः स्मृतः'इति श्लोक त्रयेण'यद्धर्म' इत्यस्योत्तरमुक्तम्। 'गृहीत्वापीत्यादि' श्लोकत्रयेण द्वेष, हर्ष, मोह कामादिरहितश्चरतीति 'यथा चरती'त्येतस्योत्तरमुक्तम्। 'न यस्ये' त्यादिना 'यैर्लिङ्गैर्भगवत्प्रियः' इत्यस्योत्तरं ज्ञातव्यम्। 'न यस्य स्वः परः' इत्यादिना श्लोकत्रयेण 'यादृश' इत्यस्योत्तरं वेदितव्यम्। 'यद्ब्रूते' इत्यस्य च हरिनामानीति अर्थात्— ज्ञातव्यम्। 'विसृजती'त्यनेनोक्तसमस्तलक्षणसारं व्याचष्टे—इति श्रीस्वामिचरणाः। श्रीसुदर्शनसूरिचरणास्तु—भागवतं भगवद्भक्तं 'यद्धर्मं' इति श्रीभगवति सर्वकर्मार्पणरूपन्यासधर्मयुक्तः यादृशवासना युक्तः, चरतीति यद् भक्षयति यज्जानाति श्रीभग-

वत्प्रसादं तत्वत्रयं च मन्त्रं श्रीभगवद्गुणान्, लिङ्गानि च शङ्ख-चक्रधारणोर्ध्वपुण्ड्रयुगलमालिकादीनि पञ्चरात्र प्रसिद्धानि अन्यानि चेति प्रश्नार्थ इत्याहुः।

पूर्वोक्तानि समस्तभागवतलक्षणानि श्रीहनुमति पर्यवस्यन्तीति तस्य परमभागवतत्वं युक्तमेव ।

हनुमान्—हनुरस्यास्तीति हनुमान् प्राशस्त्ये मतुप् प्रशस्तहनुयुक्त इत्यर्थः, श्रीमद्रामायणे इन्द्रः हनुमानिति नामाकार्षीत्—

मत्करोत्सृष्टवज्रेण हनुरस्य यथा हतः ।
नाम्ना वै कपिशार्दूलो भविता हनुमानिति ॥

महर्षि अगस्त्य सम्मुखे श्रीहनुमतो यशोगानम् भगवता श्रीरामेण श्रीमुखेन कृतम्—तथाहि-'अपृच्छत तदा रामो दक्षिणाशाश्रयं मुनिम् । प्राञ्जलिर्विनयोपेत इदमाह वचोऽर्थवत् ।

अतुलं बलमेतद्वै बालिनो रावणस्य च ।
नत्वेताभ्यां हनुमता समं त्विति मतिर्मम ॥
शौर्यं दाक्ष्यं बलं धैर्यं प्राज्ञता नयसाधनम् ।
विक्रमश्च प्रभावश्च हनूमति कृतालयाः ॥
न कालस्य न शक्रस्य न विष्णोर्वित्तपस्य च ।
कर्माणि तानि श्रूयन्ते यानि युद्धे हनूमतः ॥
एतस्य बाहु वीर्येण लङ्का सीता च लक्ष्मणः ।
प्राप्ता मया जयश्चैव राज्यं मित्राणि बान्धवाः ॥
हनुमान् यदि नो न स्याद्वानराधिपतेः सखा ।
प्रवृत्तिमपि को वेत्तु जानक्याः शक्तिमान् भवेत् ॥

श्रीरामेण पृष्टः श्रीअगस्त्य महर्षिः सविस्तरं श्रीहनुमच्चरित्रं श्रावयामास। श्रीहनुमच्चरितमुपसंहरता महर्षिणोक्तम्–

'पराक्रमोत्साहमतिप्रताप सौशील्य माधुर्यनयानयैश्च।
गाम्भीर्यचातुर्य सुवीर्य धैर्यैर्हनूमतः कोऽभ्यधिकोऽस्ति लोके॥
असौ पुनर्व्याकरणं ग्रहीष्यन् सूर्योन्मुखः प्रष्टुमनाः कपीन्द्रः।
उद्यद्गिरेरस्तगिरिं जगाम ग्रन्थं महद्धारयनप्रमेयः॥
ससूत्रवृत्त्यर्थ पदं महार्थं ससङ्ग्रहं साध्यति वै कपीन्द्रः।
न ह्यस्य कश्चित् सदृशोऽस्ति शास्त्रे वैशारदे छन्दगतौ तथैव॥'

किष्किन्धाकाण्डे अस्य पाण्डित्यं स्वयं प्रशशंस श्रीरामः–

'नानृग्वेदविनीतस्य नायजुर्वेदधारिणः।
नासामवेदविदुषः शक्यमेवं प्रभाषितुम्॥
नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहु व्याहरताऽनेन न किञ्चिदपशब्दितम्॥'

न केवलं वेदाध्ययनमपितु व्याकरणाद्यंगभूतानां शास्त्राणामप्यध्ययनमनेन कृतम्। शिक्षा शास्त्रमप्यनेन-श्रुतमिति प्रोवाच भगवान् श्रीरामः॥

'न मुखे नेत्रयोर्वापि ललाटे च भ्रुवोस्तथा।
अन्येष्वपि च गात्रेषु दोषः संविदितः क्वचित्॥
अविस्तरमसन्दिग्धमविलम्बितमद्रुतम्।
उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे॥
संस्कारक्रमसंपन्नामद्रुतामविलम्बिताम्।
उच्चारयति कल्याणीं वाचं हृदयहारिणीम्॥

अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया ।
कस्य नाराध्यते चित्तमुद्यतासेररेरपि ॥'

युद्धकाण्डेऽपि जगज्जननी श्रीजानकी हनुमन्तमष्टाङ्ग बुद्धिसम्पन्नमाह—

अतिलक्षणसम्पन्नं माधुर्यगुणभूषितम् ।
बुध्द्या ह्यष्टाङ्गया युक्तं त्वमेवार्हसि भाषितुम् ॥

यथा भगवता श्रीरामेण बहुव्याहरताऽनेनं किञ्चिदपशब्दितमित्युक्तं, तथैव जगज्जननी श्रीजानक्यपि अतिलक्षणसम्पन्नमित्यादिना हनुमद्वाक्यसौष्ठवं प्रशशंस। ग्रहणं धारणं चैव स्मरणं प्रतिपादनम्। ऊहोऽपोहोऽर्थविज्ञानं तत्वज्ञानं च धीगुणाः। इत्युक्ताष्टाङ्गबुद्धियुतो हनुमानिति फलितोऽर्थः ॥

श्रीमद्रामायणे अनेकेषु स्थलेषु श्रीहनुमतः बल, पराक्रम, बुद्धि श्रीरामभक्त्यादिवैभवं वर्णयामास महर्षिः। अस्योपकारं स्मरन् श्रीरामः सपरिकरः ऋणी बभूव—

'एकैकस्योपकारस्य प्राणान् दास्यामि ते कपे ।
शेषस्येहोपकाराणां भवाम ऋणिनो वयम् ॥
मदङ्गे जीर्णतां जातु यत्त्वयोपकृतं कपे ।
नरः प्रत्युपकाराणामापत्स्वायाति पात्रताम् ॥'

उपकारी नरः आपात्काल एव प्रत्युपकाराणाम् पात्रतामायाति—प्राप्नोति, अतः हे कपे! यत् त्वया उपकृतं तन्मदङ्गेजीर्णतां जातु। न तवापत्कालः आगमिष्यति नाहं प्रत्युपकरिष्यामि। अहं सदा तव ऋणी भूत्वैव स्थास्यामि। न केवलमहमेव

ऋणी भवामि किन्तु श्रीसीतालक्ष्मणभरतसहिता वयम् ऋणिनो भवामः। श्रीसीतासन्देशश्रावणेन रामम्, श्रीरामसन्देशश्रावणेन श्रीसीताम्, भेषजप्रदानेन श्रीलक्ष्मणम्, श्रीसीतारामसन्देशश्रावणेन भरतं च श्रीहनुमानुपकृतवानिति सभक्ताः सपरिकराः ऋणिनो वभूवः। युद्धकाण्डेऽपि भगवता—उक्तम्—

अहं च रघुवंशश्च लक्ष्मणश्च महाबलः।
वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः॥

धर्मतः—धर्मे सप्तम्यर्थे तसिः धर्मतः परिरक्षिताः धर्मे स्थापिताः। धर्मस्थापनं चात्राधर्मान्मोचनम्। यदि हनुमान् वैदेहीं नाद्राक्षीत् तदाऽहं जीवितं—जह्याम्, मद्वियोगासहिष्णवो लक्ष्मणादयश्च तथा कुर्युः, तथा चात्महननरूपोऽधर्मः सर्वेषाम् सम्भवेदिति भावः। यद्वा वैदेहीदर्शनरूपेण धर्मेणोपकारेण सर्वे वयम् परिरक्षिताः निरपवादाः कृताः स्म इति भावः। एवं हनुमत्कर्म मां नितराम् सुखयत्येव, किन्तु तस्य प्रत्युपकाराकरणजनितविषादः प्रेयसीवृत्तान्तश्रवणानन्दमपि तिरोधाय मां सन्तापयतीत्याह।—

इदन्तु मम दीनस्य मनो भूयः प्रकर्षति।
यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम्॥

अस्य प्रेयसीवृत्तान्तं श्रावयतुर्हनुमतः तत्सदृश प्रत्युपकारयोग्यं प्रियं न कुर्मि न करोमीति मम दीनस्य मनः प्रकर्षति—व्याकुलयति सन्तापयति वा। स च सन्तापः सर्वस्वदानरूपेणप्रत्युपकारेण विना न शाम्यति। तस्य चेदानीमसम्भवान्मदीयः परिष्वङ्ग एव प्रतिनिधिर्भवत्वित्याह एष इति। यद्वा मद्दिव्य-

मङ्गलमयविग्रहालिङ्गनरूपपरिष्वङ्गमन्तरा पुरुषार्थचतुष्टय-पर्यन्तं दानमपि सर्वस्वदानं न सिध्यत्यतः तस्य सर्वस्वदानस्य मया क्रियमाणः आलिङ्गनरूपः परिष्वङ्ग एव प्रतिनिधिर्भवत्वित्याह—

एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः ।
मया कालमिमं प्राप्य दत्तश्चास्तु महात्मनः ॥

तु शब्दोऽवधारणे । इमं प्रत्युपकारार्हं कालं प्राप्य मया दत्तोऽयं परिष्वङ्ग एव सर्वस्वभूतोऽस्तु,सर्वस्वदान सदृशोऽस्त्विति सम्बन्धः ॥ एषः स्वानुभवसिद्धः, इच्छागृहीताभिमतोरुदेहत्वेन स्वस्य निरवधिकभोग्यतया स्थितः । लोके स्वस्य रस्यं हि स्वाभिमताय दिशति । सर्वस्वभूतः एतद्व्यतिरिक्त प्रदाने इदं न दत्तमिति न्यूनता स्यात् । एतत्प्रदाने तु सर्वं दत्तम्, एतद्विग्रहस्य सर्वाश्रयत्वात् । 'परिष्वङ्गो हनूमतः' अमृताशिनो हि तृणकवलादिकं न देयम् । "स्नेहो मे परमो राजन्" इत्येतद्विग्रहे प्रेमवतः स एव दातव्यः। मया कालमिमं प्राप्य दत्तः। अयं किञ्चिदपि मत्तोऽनपेक्षमाणो वर्तते । कदा मयाऽस्मै किञ्चिद्दत्तं स्यादिति सोत्कण्ठेन मया स्थितम्, सम्प्रत्यप्रतिषेधसमयलाभाद्दत्तवानस्मि । तस्य महात्मनः महास्वभावस्य महोदारस्येत्यर्थः । देहद्वयमुपकृतवतः किमेकदेहप्रदानमुचितमितिभावः । वेण्युद्ग्रथनसमये सीतां संरक्ष्य दत्वा 'अवगाह्यार्णवं स्वप्स्ये' इति दशायां रामदेहं च सीतासन्देशवचनेनाजीवयद्धि । एवं देहद्वयं दत्तवतः किमेकदेहदानमुचितमिति भावः ।

इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्तं परिषष्वजे ।
हनुमन्तं महात्मानं कृतकार्यमुपागतम् ॥

प्रीतिहृष्टाङ्गः प्रीत्या पुलकितगात्रः । महात्मानमित्यादि-विशेषणानि परिष्वङ्गहेतुभूतानीत्यवधेयम् । सुविशदतरम् श्री-हनुमच्चरित्रम् श्रीमद्रामायणे रसनीयम् ।

**सह किम्पुरुषैः**---किम्पुरुष देशवासिभिः किन्नरैः सह श्रीहनुमान् श्रीराममुपास्ते,एतेन भक्तैस्सह भगवद्रसास्वादनं कर्तव्यमिति ।

**अविरतभक्तिः**—भक्तिरिह भजनं तदिहामुष्यनैराश्येन परस्मिन् मनः कल्पनम्'सर्वोपाधिविनिर्भुक्तं तत्परत्वेन निर्मलम् । हृषीकैश्च हृषीकेशसेवनं भक्तिरुच्यते ॥' इत्यादि श्रुतिस्मृतिषु ऐहिकामुष्मिकफलोपभोगविरागपूर्वकं अहैतुकं भगवति मनोनिवेशनं भक्तिरुक्ता– श्रीमद्भागवतेऽपि भगवान् कपिलः प्राह––

देवानां गुणलिङ्गानामानुश्रविककर्मणाम् ।
सत्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥
मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥
सालोक्य सार्ष्टिसामीप्य सारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥

स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥

तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा भक्तिः पूर्वाचार्यैः प्रतिपादिता। न विरता अविरता विजातीयप्रत्ययान्तर रहिता भक्तिरित्यर्थः।

श्रीमद्रामायणे श्रीहनुमता—एतादृशी भक्तिर्याचिता 'स्नेहो मे परमो राजंस्त्वयि तिष्ठतु नित्यदा। भक्तिश्च नियता वीर भावो नान्यत्र गच्छतु।' नित्यदा सर्वकाले स्नेहो नाम प्रियायां प्रियस्येव सदा स्मृति हेतुः। भक्तिर्नाम परलोकगतित्वेनोपास्यत्व बुद्धिः। नित्यदेत्यनेन जलं विना मत्स्यस्येव क्षणमपि तां विना जीवितुमशक्यत्वम् सूचितम्। अन्यत्र भावो मा गच्छतु विषयान्तरे इति भावः। सुहृदि प्रीतिः स्नेहः, उत्कृष्टे प्रीतिः भक्तिरिति श्रीगोविन्दराजः। अविरता भक्तिर्यस्यासौ अविरतभक्तिः।

**उपास्ते**—एवंभूतः श्रीहनुमान् लक्ष्मणाग्रजं सीताभिरामम् श्रीराममुपास्ते। उपासनयैव भगवान् प्राप्यते इति राद्धान्तितम्। 'विज्ञाय प्रज्ञां कुर्वीत' 'इत्यनया श्रुत्या ज्ञानानन्तरमुपासनं प्रतिपादितम्।

भगवता श्रीरामानुजाचार्येणापि समन्वयाधिकरणे प्रत्यपादि-एवंभूतं ब्रह्म कथं प्राप्यत इत्यपेक्षायाम् 'ब्रह्मविदाप्नोति परम्' आत्मानमेव लोकमुपासीत, इति वेदनादिशब्दैरूपासनं ब्रह्म-प्राप्त्युपायतया विधीयते। यथा 'स्ववेश्मनि निधिरस्ति' इति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तस्सन् पश्चात्तदुपादाने च प्रयतते।

यथा च– कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनान्निष्क्रान्तो मार्गाद् भ्रष्टो नष्ट इति राज्ञा विज्ञातः स्वयञ्चाज्ञातपितृकः केनचिद् द्विजवर्येण वर्धितोऽधिगतवेदशास्त्रः षोडशवर्षः सर्वकल्याणगुणाकरः तिष्ठन्, 'पिता ते सर्वलोकाधिपतिः गाम्भीर्यौदार्यवात्सल्यसौशील्यवीर्यपराक्रमादिगुणसम्पन्नः त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठति' इति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोति चेत् तदानीमेव–अहं तावत् जीवतः पुत्रः मत्पिता च सर्वसम्पत्समृद्धः इति निरतिशयहर्षसमन्वितो भवति राजा च स्वपुत्रं जीवन्तमरोगमतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वा–अवाप्तसमस्तपुरुषार्थो भवति। पश्चात्तदुपादाने च प्रयतते। पश्चात्तावुभौ संगच्छेते च इति।

अतः ज्ञानानन्तरमुपासनमन्तरा परतत्त्वसाक्षात्कारो दुर्लभ इति। श्रीमद्भागवते सर्वत्र ज्ञानादिसाधनानां भक्तिरसे पर्यवसानमुक्तम् तथाहि––'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा' 'श्रेयः सृतिं भक्तिमुदस्य ते विभो' 'ज्ञाने प्रयासमुदपास्य नमन्त एव' 'अथापि ते देव' इत्यादि स्थलेषु– अन्वयमुखेन भक्तिरसस्योत्कर्ष उक्तः। व्यतिरेकमुखेनापि भक्तिसहितानां साधनानामकिञ्चित्करत्वमुक्तम्। तथाहि–'नालं द्विजत्वं देवत्वम्' 'नैष्कर्म्यमप्यच्युतभाववर्जितम्' 'नायं सुखापो भगवान्' इत्यादि।

अत्रापि– ज्ञानिनामग्रणीः श्रीहनुमान् श्रीराममुपास्ते। किञ्च भक्तिरसरसास्वादनायैव श्रीमद्भागवतस्याविर्भाव इति विदितचरं विदुषाम्। 'यथा हरौ भगवति नृणां भक्तिर्भविष्यति सर्वा-

त्मन्यखिलाधारे इति सञ्चिन्त्य वर्णय।' यथा वर्णितेन नृणां भक्तिर्भविष्यतीत्येवं संकल्प्य सञ्चिन्त्य तथा हरिलीलाप्राधान्येन श्रीभागवतं वर्णय, न तु भक्तिरसविघातेन केवलं तत्त्वमित्यर्थ इति श्रीधरस्वामिना व्याख्यातम्।

**आर्ष्टिषेणेन सह गन्धर्वैरनुगीयमानां परमकल्याणीं भर्तृभगवत्कथां समुपश्रृणोति स्वयं चेदं गायति।**

अन्वयः— आर्ष्टिषेणेन, सह गन्धर्वैः अनुगीयमानां, परम-कल्याणीम् भर्तृभगवत्कथाम् समुपश्रृणोति, स्वयं च इदम् गायति।

व्याख्या—तत्र गन्धर्वैः अनुगीयमानां भर्तृभगवत्कथां श्रीराम-स्य भगवतः परमकल्याणमयीम् कथां श्रीमारुतनन्दनः सम्यक् उपश्रृणोति, तथा च "ॐ नमो भगवते उत्तमश्लोकाय" इति वक्ष्यमाणमन्त्रमुच्चारयन् भगवन्तं स्तौति। भर्ता चासौ भगवांश्च तस्य कथामिति स्वामिपादाः। भगवत्कथामित्युक्तेः कस्यचित्पूज्यस्य कथामिति तद्व्यावृत्यर्थं भर्तृपदम्। भर्ता सन् भृयमाणोविभर्ति, इति श्रुतिरपि संगृहीताऽनेनेति ज्ञातव्यमिति विजयध्वजतीर्थः। भर्तृत्वादि मननविशेषेण सुखवैशिष्ट्यं दर्शितमिति श्रीजीवगोस्वामिपादाः। भर्तुरेव भगवतः कथामित्यनेन नारदादिरिव नावतरन्तरकथायामनुरज्यतीति द्योतितमिति श्रीविश्वनाथ चक्रवर्तिनः।

श्रीमद्रामायणे— श्रीमन्मारुतिः चिरजीवी भूत्वा त्वत्कथा-सुधां चिरकालपर्यन्तम् श्रृणुयामाहमिति भगवन्तं श्रीरामं वरं ययाचे—

यावद्रामकथा वीर चरिष्यति महीतले ।
तावच्छरीरे वत्स्यन्ति प्राणा मम न संशयः ॥
यच्चैतच्चरितं दिव्यं कथां ते रघुनन्दन ।
तन्ममाप्सरसो नाम श्रावयेयुर्नरर्षभ ॥
तच्छ्रुत्वाऽहं ततो वीर तवचर्यामृतं प्रभो ।
उत्कण्ठां तां हरिष्यामि मेघलेखामिवानिलः ॥

त्वत्कथामृतरसास्वादबलादेव ममप्राणाः तावच्छरीरे वत्स्यन्तीति भावः ।

एतेन भगवत्कथा श्रवणकाले भगवता सह भक्तानां नित्य-संश्लेषो ध्वनितः । उक्तं च वेदस्तुतौ—दुरवगमात्मतत्वनिगमाय-तवात्ततनोश्चरितमहामृताब्धिपरिवर्त परिश्रमणाः । न परि-लषन्ति केचिदपवर्गमपीश्वर? ते चरणसरोज हंसकुलसङ्गविसृष्ट गृहाः । श्रीधरस्वामिनाप्युक्तम्—त्वत्कथामृतपाथोधौ विहरन्तो महामुदः । कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् । अनेन मोक्षसुखादप्यधिकं भगवत्कथायां सुखमितिभावः । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति' श्रुतिवाक्ये ब्रह्मणि-तृतीया—विभक्त्या तस्याः अप्राधान्यम्,गुणानाञ्च प्राधान्यमभ्युप-गतं पूर्वाचार्यैः । पञ्चस्तवीकारोऽप्याह—तादृग्गुणो ननु बभूविथ-राघवत्वे यस्तावकं चरितमन्वहमन्वभुङ्त । सोऽत्रैव हन्त हनु-मान् परमां विमुक्तिं बुद्धयाऽवधूय चरितं तव सेवतेऽसौ ॥

श्रीमन्मारुतनन्दने कामप्यनिर्वचनीयां कथाभक्तिं दृष्ट्वा स्ववरासनादुत्थाय श्रीरामः तं सष्वजे— 'एवं ब्रुवाणं रामस्तु हनुमन्तं वरासनात् । उत्थाय सष्वजे स्नेहाद्वाक्यमेतदुवाच ह ।

'एवमेतत् कपिश्रेष्ठ भविता नात्र संशयः । चरिष्यति कथा यावदेषा लोके च मामिका । तावत्ते भविता कीर्तिः शरीरेऽप्यसवस्तथा । लोका हि यावत् स्थास्यन्ति तावत् स्थास्यति मे कथा ।' 'तन्ममाप्सरसो नाम श्रावयेयुर्नरर्षभ' इत्यनेन गान्धर्ववेदानुकूलं श्रीरामचरितश्रवणं सूचितम्— गन्धर्वाः अप्सरसश्च षड्जादि स्वरभूषितां तन्त्रीलय समन्वितां श्रीरामकथां श्रीहनुमन्तं श्रावयन्तीति श्रीरामायणे सुस्पष्टम् । श्रीरामायणस्य प्रथमगायकौ कुशीलवौ मार्गविधानसम्पदा आदिकाव्यमगायतामिति विदितचरम् । 'ततस्तु तौ रामवचः प्रचोदितावगायतां मार्गविधान सम्पदा ।' प्राकृतावलम्बिगानं देशी, संस्कृतावलम्बिगानं मार्गः, किञ्च देशी मार्गश्चेति द्वौ गानप्रकारौ, तत्र मार्गः सार्वत्रिकः देशी क्वाचित्कः । देशविशेषनैरपेक्ष्येण शास्त्रप्रतिपादितो मार्गस्सार्वत्रिकरागप्रकारः ।

कुशीलवौ, गान्धर्वशास्त्रतत्त्वज्ञौ मूर्च्छनास्थानकोविदौ स्वरसम्पन्नावास्तामिति श्रीमद्रामायणे सुस्पष्टं प्रतिपादितम् । 'कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ । भ्रातरौ स्वरसम्पन्नौ ददर्शाश्रमवासिनौ । पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् । जातिभिः सप्तभिर्बद्धं तन्त्रीलयसमन्वितम् ॥ रसैः शृङ्गारकारुण्यहास्यवीरभयानकैः । रौद्रादिभिश्च संयुक्तं काव्यमेतदगायताम् ॥ तौ तु गान्धर्वतत्त्वज्ञौ मूर्च्छनास्थानकोविदौ । भ्रातरौ स्वरसम्पन्नौ गन्धर्वाविव रूपिणौ ॥

श्रीमद्भागवतेऽपि श्रीहनुमान् आर्ष्टिषेणेन सह गन्धर्वैरनुगीयमानां परमकल्याणीं भर्तृभगवत्कथां समुपशृणोतीति सुस्पष्टम् ।

एतेन श्रीमन्मारुतेः गान्धर्वशास्त्रवेदित्वं सूचितम्। 'नानृग्वेद-विनीतस्य नायजुर्वेदधारिणः। नासामवेदविदुषः शक्यमेवं प्रभाषितुम्। नूनं व्याकरणं कृत्स्नमनेन बहुधाश्रुतम्' बहुव्या-हरताऽनेन न किञ्चिदपशब्दितम्' इत्यादौ किष्किन्धाकाण्डे श्री-हनुमतः षडङ्गवेदवेदित्वं सुस्पष्टं प्रतिपादितमेव। अतः श्रीहनु-मद्भाषणमाधुर्यस्य प्रशंसां भगवान् श्रीरामः स्वमुखेन चकारेति-पूर्वमेव वर्णितम्॥ द्वापरान्तेऽपि श्रीरामकथाश्रवणं श्रीहनुमता-कृतमिति। महाभारते वनपर्वणीत्थं वर्णितम्-श्रीद्रौपद्याः प्रियकामाय सौगन्धिककमलमानेतुं यदा श्रीभीमः कदली वनं जगाम, तदा हनु-मता सह तस्य साक्षात्कारो जातः, तत्रोभयोः रमणीयः सम्वादः समपद्यत। श्रीभीमसेनमानविमोचनानन्तरं श्रीमन्मारुतिः स्व स्वरूपमाविश्चकार तदनन्तरं समग्रं श्रीरामचरितं भीमं श्रावया-मास। तदनन्तरं भीमसेनमाह श्रीमन्मारुतिः।

वरं मया याचितोऽसौ रामो राजीवलोचनः।
यावद्रामकथेयं ते भवेल्लोकेषु शत्रुहन्॥
तावज्जीवेम इत्येवं तथास्त्विति च सोऽब्रवीत्।
सीताप्रसादाच्च सदा मामिहस्थमरिन्दम॥
उपतिष्ठन्ति दिव्या हि भोगा भीम! यथेप्सिताः।
तदिहाप्सरसस्तात गन्धर्वाश्च सदाऽनघ॥
तस्य वीरस्य चरितं गायन्तो रमयन्ति माम्॥ इत्यादि।

श्रीमद्रामायणे श्रीरामकथाश्रवणार्थं श्रीरघुनन्दनं वरं ययाचे श्रीमन्मारुतिः। हनुमदिप्सितं वरं ददौ श्रीरामभद्रः इति पूर्वमेव भणितम्।

एव मेतत्कपिश्रेष्ठ ! भविता नात्र संशयः ।
चरिष्यति कथा यावदेषा लोके च मामिका ॥
तावत्ते भविता कीर्तिः शरीरेऽप्यसवस्तथा ।

अत्र 'तावत्ते भविता कीर्तिरित्यनेन' श्रीरघुनन्दनः प्राह–यदेतादृशी कीर्तिरद्यावधि न केनापि लब्धा– अद्यावधिसमस्तसाधनफलं मद्दर्शनमेव वेदशास्त्रादिषु वर्णितम् किन्तु मद्दर्शनं विहाय कथाश्रवणं न केनापि याचितम् । मदपेक्षया मद्गुणानां प्राधान्यं यद्यपि श्रुतिस्मृत्यादिषु प्रतिपादतम्, तथापि मत्सन्निधिं विहाय मत्कथारसरसास्वादनं न केनाप्यनुष्ठितम् । भविष्यकाले सर्वे मम भक्ताः त्वामनुगमिष्यन्ति, इदृशी–कीर्तिस्त्वयैव लब्धा 'तावत्ते भविता कीर्तिरिति' वचनस्येदमेव तात्पर्यम् । परमकल्याणीं भर्तृभगवत्कथां समुपश्रृणोतीति वचनम् श्रीरामकथा श्रवणभक्ति परिचायकं मन्तव्यम् । स्वयं चेदं गायतीतिवचनेन वक्ष्यमाणं- ॐनमो भगवते उत्तमश्लोकायेतिमन्त्रमुपांशुविधिना गायतीत्यवगन्तव्यम् ।

**ॐ नमो भगवते उत्तमश्लोकाय नम आर्यलक्षणशीलव्रताय नम उपशिक्षितात्मन उपासितलोकाय नमः साधुवादनिकषणाय नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नम इति ।३।**

अन्वयः– ॐ भगवते उत्तमश्लोकाय नमः आर्यलक्षणशीलव्रताय नमः उपशिक्षितात्मने उपासितलोकाय साधुवादनिकषणाय नमः ब्रह्मण्यदेवाय नमः महापुरुषाय महाराजाय नमः इति।

**व्याख्या**—ओमिति ब्रह्मणो निर्देशः—'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।' इति वचनात् स्वव्यतिरिक्तं चिदचिदात्मकं सर्वं जगन्नित्यविभूतिञ्च स्वशेषतया स्वभावेनैव स्वीकृतवते, इति– ओमित्यस्यार्थः। किञ्च श्रीरामतापनीयोपनिषदि–अकाराक्षरसम्भूतः सौमित्रिर्विश्वभावनः। उकाराक्षरसम्भूतश्शत्रुघ्नस्तैजसात्मकः। प्रज्ञात्मकस्तु भरतः मकाराक्षरसम्भवः। अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः॥ इत्यादि मन्त्रैः प्रणवनिष्ठ–प्रकारोकारमकारार्धमात्रादीनां सौमित्र्यादीनां जाग्रदाद्यवस्थाभिमानिसर्वजीवनियामकत्वोपपत्त्यनुसारेण ब्रह्मानन्दैकविग्रहस्य श्रीरामस्य सर्वजीवतुरीयावस्थानियामकत्वमुपपद्यते। तत्र ब्रह्मानन्दैकविग्रहः-ब्रह्म चासावानन्दश्च ब्रह्मानन्दः स चैकां विग्रहः शरीरं यस्य स तथा। अत्र ब्रह्मानन्दाभ्यां तद्विग्रहस्य प्राकृतत्वनिरासेन व्यापकत्वं सुखरूपत्वञ्चोक्तम्। ब्रह्मानन्दैक विग्रहः आनन्दरूपं ब्रह्मैव विग्रहो यस्य स तथोक्तः। श्रीरामस्य ब्रह्मस्वरूपमेव विग्रहोऽस्तीति कृत्वा तत्र शरीरशरीरिभेदो नास्तीति सूचितं भवति। श्रीरामस्य स्वरूपविग्रहयोरुभयोः सच्चिदानन्दरूपत्वस्मरणाच्च॥

अथ श्रीरामालिङ्गितायाः श्रीसीतायाः श्रीरामप्रतिपादकार्धमात्रसन्निहितविन्दुप्रतिपाद्यत्वमाह। श्रीरामसान्निध्यवशादिति—

'श्रीरामसान्निध्यवशाज्जगदानन्ददायिनी।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम्॥

सा सीता भगवती ज्ञेया मूलप्रकृतिसंज्ञिता।
प्रणवत्त्वात्प्रकृतिरिति वदन्ति ब्रह्मवादिनः ॥'

रामपदस्य पूर्वकत्वं भक्त्यतिशयविधानार्थं तत्प्राप्तेरेव परमपुरुषार्थत्वात्, स्वभावतो जगदानन्ददायिनी तत्तत्कर्मानुसारेण तु सर्वदेहिनां विश्वाद्यवस्थावतां सौमित्र्यादि नियाम्यानामुत्पत्तिस्थितिसंहारकारिणी या मूल प्रकृति संज्ञिता सा सीता भगवती ज्ञानशक्त्यादि षड्गुणवती ज्ञेया। अत्र मूलप्रकृतिशब्दो न जड प्रकृति परः" हेमाभया द्विभुजया सर्वालङ्कारया चिता' इति पूर्व तापनीये तस्या चिद्रूपत्वश्रवणात्। यस्याः कटाक्षेणैव जातामूलप्रकृतिसंज्ञितेति मूलप्रकृतिरविकृतिरित्युक्तायाः मूलप्रकृतेः सीताकटाक्षोद्भवत्व स्मरणाच्च ॥ 'प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्' बासुदेव परा प्रकृतिरित्यादि स्थलेषु भगवद्विषयेऽपि प्रकृतिशब्दप्रयोगो दृश्यते। यथा भगवान् प्रकृतेः परस्तथैव श्रीसीताऽपि प्रकृतिपरेति– असकृदवोचाम। प्रकृति पदनिर्वचनमाह– प्रणवत्वात्प्रकृतिरिति 'णु स्तुता' वित्यस्माद्धातोः प्रणूयते प्रस्तूयते स्वकटाक्षोद्भवायाः जडप्रकृतेर्महदाद्याकारेण निर्माणे या सा प्रणवा, तस्याः भावस्तत्वम्, तस्मात् प्रणवत्वात् प्रकर्षेण क्रियते अनयेति प्रकृतिः इति ब्रह्मवादिनः वदन्ति।

अत्र हि विश्वतैजसादिनियामकानां सौमित्र्यादीनां श्रीरामकैङ्कर्यपरत्वप्रसिद्ध्या भगवच्छेषत्वसिद्धेः। सुतरां तन्नियम्यानां विश्वतैजसादीनां जाग्रदाद्यवस्थाभिमानिनां तच्छेषत्वोपत्तेः। अपरञ्च–उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनामित्युक्तेः सर्वजगदुत्पत्त्यादिकारिण्या जानक्याः श्रीरामस्य च सर्व-

जगत्स्वामित्वसिद्धेः। सर्वं चराचरात्मकं जगत् श्रीसीताविशिष्टस्य श्रीरामस्यैव शेषभूतम्, न स्वस्यान्यस्य वेति कृत्वा जीवानां जीवान्तरनिष्ठ स्वरक्षणोपायत्वप्राप्यत्वयोरनुपपत्तेः। सर्वस्वामित्वं श्रीसीतारामनिष्ठमेव स्वरक्षणोपायत्वञ्चेति प्रणवार्थबोधक मन्त्राणां फलितोऽर्थः।

तथा च षडक्षरतारकवत् तत्तत्कार्यभूतः प्रणवोऽपि सर्वजगतः श्रीरामशेषत्वं बोधयतीत्युभयोरेकार्थवाचकत्वे नैकवाक्यता-उपपन्नतरा। एवमन्यत्र श्रुतस्यापि प्रणवस्योक्तरीत्या अयमेव तात्पर्यार्थो निर्णेतव्यः।

किञ्चात्र श्रीजानकी वाचकस्यानुक्तेऽपि श्रीराम सान्निध्यवशादिति तत्सान्निध्यवचनमेवार्धमात्र सन्निहितस्य बिन्दोस्तद्वाचकमुपपादयति।

श्रीरामजानक्योः सान्निध्यवदर्धमात्रबिन्दोरपि सान्निध्य दर्शनात्। बिन्दु जानक्योः प्रत्येकजगत्कारणत्वश्रवणाच्च। तत्र प्रणवस्य जगत्कारणत्वनिष्पादनं जगदाकारपरिणताहङ्काराद्युत्पादक महत्तत्वपर्याय प्रणवोपरिस्थबिन्दुद्वारैवोपपद्यते। श्रीरामवाचकार्धमात्रा द्वारा प्रणवस्य जगत्कारणत्वोपपत्तावपि श्रीरामसन्निहिताया जानक्या एव जगत्कारणश्रवणेन श्रीरामवाचकार्धमात्रा सन्निहित जानकीवाचकबिन्दुद्वारैव प्रणवस्य-सुतरां जगत्कारणत्वोपपत्तेः।

वेदावतारेऽपि श्रीरामस्य प्रणवस्वरूपं प्रत्यपादि महर्षिणा—

त्वं यज्ञस्त्वं वट्षकारस्त्वमोंकारः परन्तप।
प्रभवं निधनं वा ते न विदुः को भवानिति॥

ॐ नमो भगवते उत्तमश्लोकाय इत्यस्मिन् मन्त्रे नमः शब्दः प्रपत्तिसूचकः । अनन्तजन्मसञ्चित पापविनाशार्थं भगवत्पादारविन्दयोः नमस्कारो विधेयः। 'भूयिष्ठान्ते नम उक्ति विधेम' इति ईशावास्योपनिषदि नमः शब्देन प्रपत्तिर्विहिता ।

द्रौपद्यास्सहितास्सर्वे नमश्चक्रुर्जनार्दनम् इति महाभारतेऽपि द्रौपद्या सह पाण्डवाः भगवन्तम् नमश्चक्रुः । अत्रापि नमश्शब्देन शरणागतिर्वर्णिता । वेदावतारेऽपि श्रीलक्ष्मणप्रसादनायसुग्रीवमुपदिशति श्रीमारुतनन्दनः– कृतापराधस्य हि ते नान्यत् पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ।। अत्र भगवद्भक्तं प्रत्यञ्जलिरेव भगवदपचारपरिहारार्थं सर्वोत्कृष्टं प्रायश्चित्तमुक्तम् । श्रीयामुनाचार्येणापि स्तोत्ररत्ने सूचितम्– त्वदंघ्रिमुद्दिश्य कदाऽपि केनचिद् यथा तथा वापि सकृत्कृतोऽञ्जलिः । तदैव मुष्णात्यशुभान्यशेषतः शुभानि पुष्णाति न जातु हीयते ।।

**भगवते—**इत्यत्र भगवच्छब्दार्थः पूर्वमेव व्याख्यातः । उत्तमैः ब्रह्मादिभिः श्लोक्यते स्तूयते इत्युत्तमश्लोकः श्लोको यशो वा उत्तमं यशः यस्येति उत्तमश्लोकः। श्रीजीवगोस्वामिपादास्तु 'नमो भगवते उत्तमश्लोकायेत्यनेन' 'भगवत्' इत्यैश्वर्यमुत्तमस्लोकायेति माधुर्यञ्च दर्शितमित्याहुः । द्वापरान्तेऽपि श्रीरामयशोगानं मुनयः कृतवन्त इति भगवता बादरायणेनापि श्रीमद्भागवते प्रतिपादितम्—यस्यामलं नृपसदस्सु यशोऽधुनाऽपि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम् ।। तं नाकपाल वसुपाल किरीटजुष्ट-

पादाम्बुजं रघुपतिं शरणं प्रपद्ये ॥ 'यस्य यशो नृपाणां युधिष्ठिरादीनां सदस्सु ऋषयो मार्कण्डेयादयो गायन्ति' इति श्रीधरस्वामि-श्रीवीरराघव-श्रीविश्वनाथचक्रवर्तिप्रभृतिभिर्व्याख्यातम्।

श्रीमद्भागवते संक्षेपेण श्रीरामचरितं वर्णितं यतोहि पूर्वमेव महर्षिवाल्मीकिना सविस्तरं श्रीरामचरितं भणितम्। महर्षि शुकोऽप्याह– तस्यानुचरितं राजन्नृषिभिस्तत्त्वदर्शिभिः। श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः॥ ऋषिभिर्वाल्मीकिमुख्यैर्भूरि वर्णितं त्वया मुहुः श्रुतं तथापि संक्षेपतः कथ्यमानं शृणु।

'गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः,
पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरीन्द्रानुजाभ्याम्।
वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भ,
त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतान्नः' ॥

अस्य श्लोकस्य व्याख्यानं कुर्वता श्रीधरस्वामिनोक्तम्– 'ग्रन्थकोटिभिराकीर्णमद्भुतं रामविक्रमम्। अध्यायद्वयतो वक्ष्यन्नेकश्लोके समस्यति। श्रीविश्वनाथचक्रवर्तिनाप्युक्तम्–

'कार्त्स्न्यान्न वक्तुं लिखितुं शक्या शेषगणेशयोः।
या रामलीलाऽध्यायाभ्यां सा श्लोकेनाऽपि कीर्त्यते' ॥

नवम स्कन्धे– अध्यायद्वयेन श्रीरामचरितं वर्णितम्, पञ्चमस्कन्धे श्रीहनुमदुपासना रस्यते भवद्भिः। अन्येष्वपि स्कन्धेषु श्रीरामकथायाः बीजं दृश्यते। श्रीरघुनाथस्य चरितं शतकोटिप्रविस्तरं विदितचरम्। शतकोटितोप्यधिकमतः प्रविस्तरम् गणयितुमशक्यमित्यर्थः—

'चरितं रघुनाथस्य शतकोटि प्रविस्तरम् ।
एकैकमक्षरं पुंसां महापातकनाशनम् ॥'

श्रीमारुतनन्दन उत्तमश्लोकं श्रीरामं स्तौति— ॐ नमो भगवते उत्तमश्लोकाय ।'

**नम आर्यलक्षणशीलव्रताय—** आर्याणि लक्षणानि शीलं व्रतं च यस्मिन्निति स्वामिचरणाः । आर्यस्य हरेर्लक्षणं शीलं नित्यनिर्दोषत्वं सत्यजगज्जन्मादि व्रतं च यस्य स तस्मै— इति विजयध्वजतीर्थः। 'आर्याणि सर्वैः शिरोधार्याणि लक्षणानि चरणतलगतध्वजवज्रादीनि आजानुबाहुत्वादीनि च शीलानि धीरोदात्तादीनि व्रतानि धर्मनिष्ठत्वादीनि यस्य तस्मै' इति श्रीमद्विश्वनाथचक्रवर्तिभिर्व्याख्यातम् ।

किञ्च 'पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यतीति' श्रीजनकनन्दिनीवचनेन अकारणकारूण्यमेवार्याणां व्रतमिति प्रथितचरम् । सकृदेव प्रपन्नाय तवास्मीति च याचते,अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं ममेति शरणागतेभ्य अभयदानव्रतं यस्य स तस्मै । 'महतो मन्दैस्सह नीरन्ध्रसंश्लेषः सौशील्यम्' तादृश शीलव्रतायेति बोध्यम् ।

**नम उपशिक्षितात्मने—** संयतचित्तायेति स्वामिचरणाः । उपगुरुब्राह्मणादिशिक्षाग्राहिणे—इति श्रीविश्वनाथचक्रवर्तिनः । उपशिक्षितानां सदनुशिष्टानामात्मोपास्यस्तस्मै इति सिद्धान्तप्रदीपः। विवृतं वेदावतारे महर्षिणा— 'सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः । शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः । कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि' इत्यादि ।

**उपासितलोकाय**—'उपासितोऽनुसृतो लोको येनेति स्वामिचरणाः। स्वस्य ब्रह्माद्युपास्यत्वेऽपि मया स्वाचरणेन रजकपर्यन्ता अपि लोका प्रसादनीया इति विचारवत्त्वाल्लोकानां तदुपासित्वमिति श्रीविश्वनाथचक्रवर्तिनः।' रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यतीति श्रीमद्रामायणेऽपि वर्णितम्। उपाश्रिताः आत्मानो जीवाः यस्य स तथा तस्मै लोकानुग्रहायाङ्गीकृतविग्रहायेति वा इति तीर्थः।

**नमः साधुवादनिकषणाय**— साधुवादः साधुत्वप्रसिद्धिस्तस्य निकषणाय निषकाश्मवन्निर्धारणस्थानाय परमसीम्ने इत्यर्थ इति स्वामिचरणाः। साधुवादानां ब्रह्मण्यत्व सत्यसन्धत्वकृपालुत्वादीनां निकषणाय परमोत्कर्षप्रापकाय, लोका हि साधुवादैरुत्कृष्यन्ते श्रीरामं प्राप्य साधुवादा अप्युत्कृष्टाः भवन्तीत्यर्थः। यथा परमोत्कृष्टस्यापि कनकस्य निकषं प्राप्तस्यैवोत्कर्षो लोके प्रमाणी भवति तद्वदित्यर्थ इति श्रीविश्वनाथचक्रवर्तिनः।

**नमो ब्रह्मण्यदेवाय**—ब्रह्मणि कुले साधुः ब्रह्मण्यः, 'अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्। न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः॥'इत्युक्तरीत्या ब्राह्मणरक्षणवद्धैकदीक्षत्वमेवात्र ब्रह्मण्यत्वम्, स चासौ देवः स्वतेजसा दीप्यमानः अस्पृष्टप्राकृतदोषस्तस्मै। यद्वा ब्रह्म वेदः तत्र साधुः सम्यक् प्रतिपाद्यः स चासौ देवस्तस्मै—इति श्रीवीरराघवाचार्यः।

**महापुरुषाय महाराजाय नम इति**— पुंसूक्त प्रतिपाद्यजगत्कारणत्वोपयुक्तकल्याणगुणविशिष्टाय परमपुरुषाय 'पुरु-

षान्न परं किञ्चित्सा काष्ठा सा परागतिरिति' श्रुत्युक्त पुरुष-पदवाच्यः श्रीराम एव। उपबृंहितं वेदावतारे-'शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तम इत्यादि।' महाराजाय-'राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान्। ईश्वरं तं विजानीध्वं स पिता स प्रजापति' रित्युक्त महाराजाय। 'श्रीमता राजराजेन लङ्कायामभिषेचितः' इत्यत्रापि राजराज शब्दः महाराजपदबोधकः। नमः पदावृत्तिर्गुणभेदाभिप्रायाः। २—३ ॥

**यत्तद्विशुद्धानुभवमात्रमेकं स्वतेजसा ध्वस्तगुणव्यवस्थम्।**
**प्रत्यक् प्रशान्तं सुधियोपलम्भनं ह्यनामरूपं निरहं प्रपद्ये॥**

अन्वयः—हि यत् विशुद्धानुभवमात्रम् एकम् स्वतेजसा ध्वस्तगुणव्यवस्थम्, प्रत्यक् प्रशान्तम् सुधिया उपलम्भनम् अनामरूपम् निरहम् तत् प्रपद्ये ॥४॥

**व्याख्या—**श्रीरामं परमार्थरूपेण प्रणमति—यदेकं वेदान्तेषु-प्रसिद्धं तत्त्वं तत्प्रपद्ये इति स्वामिपादाः। एतेन वेदान्तप्रसिद्धं तत्त्वमेकं श्रीराम एवेति वेदितव्यम्।

प्रथम स्कन्धे—'वदन्ति तत्तत्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥

श्लोकमिमं व्याचक्षाणाः श्रीधरस्वामिनः प्राहुः, ननु तत्त्वजिज्ञासा नाम धर्मजिज्ञासैव, धर्ममेव हि तत्त्वमिति केचित्तत्राह-तत्त्वविदस्तु तदेव तत्त्वं वदन्ति। किं तत्त् यज्ज्ञानं नाम अद्वयमिति। ननु तत्त्वविदोऽपि विगीतवचनाः—विरुद्ध वचनाः एव, मैवम्, तस्यैव तत्त्वस्य नामान्तरैरभिधानादित्याह—औपनिषदैर्ब्रह्मेति, हैरण्यगर्भैः परमात्मेति, सात्वतैर्भगवानित्यभिधीयते।

श्रीवीरराघवस्तु– यज्ज्ञानं ज्ञानस्वरूपं ज्ञानगुणकं च अद्वयं स्वतुल्याभ्यधिकवस्त्वन्तररहितमवयवभेदेरहितं वा जात्यादिभेदरहितं वा ब्रह्मपरमात्मभगवच्छब्दाभिहितं तदेव-तत्त्वमिति तत्वविदो वदन्ति, इति व्याचख्यौ। श्रीविश्वनाथ-चक्रवर्तिनः–यदद्वयं ज्ञानं तत्तत्त्वम्। ज्ञानमेव किं तत्राह ब्रह्मेति, शब्द्यते– ब्रह्मेति पदेन यदुच्यते ज्ञानिभिस्तद् ज्ञानम्। तन्मते ज्ञानं निराकारं ज्ञातृज्ञेयादिविभागशून्यं चित्सामान्यम्। चिद्वि-शेषाणां भगवद्धामादीनां तदनन्यत्वमननात्। जीवमाययोस्तच्छ-क्तित्वेन तदैक्यादिदङ्कारास्पदस्य कार्यस्य विश्वस्य कारण-मात्रात्मकत्वादद्वैतम्। तथा परमात्मेति योगिभिर्यदुच्यते तज्ज्ञा-नम्। एतन्मते परमात्मनश्चिदेकरूपत्वाद् ज्ञानमात्रत्वम्। ज्ञान-मात्रत्वेऽपि साक्षित्वादेर्ज्ञानविशेषस्याश्रयत्वमपि। द्युमणिदी-पादेर्ज्योतिरूपत्वेऽपि ज्योतिष्मत्वमिवनानुपपन्नम्। केचित् स्व-देहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तमित्यादेः साकार-त्वञ्च। मायायाः शक्तित्वान्मायिकानाञ्च तदन्यत्वाज्जीवस्य तद्भिन्नांशत्वात् ततो द्वितीयत्वाभावादद्वयत्वम्। तथा भगव-निति भक्तैर्यदुच्यते तज्ज्ञानम्। एतन्मते पूर्ववद् ज्ञानमात्रत्वेऽपि भगशब्दवाच्यषडैश्वर्यस्यापि अप्राकृतत्वेन चिन्मात्रत्वात्– तद्रू-पत्वम्। यदुक्तं विष्णुपुराणे–ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञान वैराग्ययोश्चैव षण्णां भग इतीङ्गना। ज्ञानशक्तिवलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिरिति। तथैव द्विभुजत्व चतुर्भुजत्वादि विविधचिद्घनाकारैर्बहिरन्तर्वर्तित्वेऽपि 'न च्यवन्ते च यद्भक्ता

महत्यां प्रलयादपीति'स्कान्दादिवाक्यैः सदैव सेव्यसेवकसेवादि-विभागेऽपि अद्वयत्वं पूर्ववत्तच्छक्तीनां चिदादीनां तद्विलासानां च वैकुण्ठादीनां तदभिन्नत्वमननात्,ततो भिन्नत्वभावेनैवाद्वयपदेन व्यावृत्ता। जड़भरेतेनाप्युक्तम्– 'ज्ञानं विशुद्ध परमार्थमेकम-नन्तरं त्ववहिर्ब्रह्मसत्यम्। प्रत्यक् प्रशान्तं भगवच्छब्दसञ्ज्ञं यद्वासुदेवं कवयो वदन्ति।'अत्राप्यद्वयज्ञानं भगवच्छब्दसञ्ज्ञमिति सुस्पष्टम्। श्रीमन्मारुतनन्दनः 'यत्तद्विशुद्धानुभवमात्रमेकमि'त्यनेन वेदान्त-वेद्यमेकमद्वयतत्त्वं श्रीरामं निश्चिनोति।

अत्र श्रीवीरराघवो व्याचष्टे– प्रकृति पुरुषविलक्षणपर-मात्मस्वरूपं विशोध्य तच्छ्रीरामरूपेणावस्थितं नमस्करोति– यदिति। विशुद्धं रागाद्यकलुषितं तदनुभवैकमात्रं ज्ञानैकस्वरूपं मात्रया क्वचिदप्यजडस्वरूपत्वं विवक्षितम्। विशुद्धानुभवैकमात्र-मनेन स्वरूपं निर्दिश्यते। स्वतेजसा स्वप्रकाशेन नित्यासंकुचिता-नन्द स्वरूपविषयकधर्मभूत ज्ञानेन ध्वस्ता नित्यं निरस्ता गुणा रज आदयः तत्कृतास्तिस्र उत्पत्तिस्थितिमरणभूता अवस्था यस्य। स्वतेजसा ध्वस्तगुणव्यवस्थमित्यनेन प्रकृति संसृष्ट-चेतनव्यावृतिः स ह्यध्वस्तगुणव्यवस्थः। प्रशान्तम्–क्षुत्पिपासा-शोकमोहजरामृत्युरूपोर्मिषट्करहितानन्दस्वरूपम् । यद्वा विशुद्धशब्देनैन्द्रियकानुभव व्यावृत्तिः। प्रशान्त शब्देन नित्यं रागाद्यकलुषितत्वमुच्यते। अनेन मुक्तचेतनव्यावृत्तिः। स हि बद्धावस्थायां रागादिभिः कलुषितः। प्रत्यक् स्वस्मै भासमानम्, अनेन पराचोऽचेतनस्य व्यावृत्तिः, न ह्यचेतनं स्वस्मै–अवभासते किन्तु परस्मै एव। सुधिया सम्यग् ज्ञानेनोपलम्भनम्, उपलभ्यते

इत्युपलम्भनम्। 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः। हृदा मनीषा मनसाभिक्लृप्तः' इति श्रुत्युक्त योग परिशुद्धबुद्ध्योपलभ्यमानमित्यर्थः। अनेनैव तत्कारणत्वमप्युपलक्षितम्। 'कश्च ध्येयः कारणं तु ध्येयम्' इति ध्येयत्वकारणत्वयोरेकनिष्ठत्व श्रवणात्।

यदि कारणं तर्हि कारणत्वस्य भाव्यवस्थाविशेषवतः प्रागवस्थायोगित्वरूपत्वाद्देवादि नामरूपाश्रयत्वम् स्यात्ततश्च 'सत्यं ज्ञानमनन्तं ब्रह्म निष्क्रियं निष्कलंशान्तं निरवद्यं निरञ्जनम्'इत्यादि निर्विकारित्वश्रवणविरोधस्तत्राह—अनामरूपमिति। न विद्येते स्वमात्रनिष्ठेदेवादिनामरूपे यस्य प्रकृतिपुरुषविशिष्टस्यैव कारणत्वाद्देवादि नामरूपयोः स्वविशेषणीभूतप्रकृतिपुरुषगतत्वात्तद्द्वारा सनामरूपत्वेऽपि साक्षादनामरूपमित्यर्थः। एवं भूतं यद्वेदान्तेषु प्रसिद्धम् तत्परब्रह्मस्वरूपं नृहरिं पुरुषश्रेष्ठं पुरुषोत्तममिति यावत्। एवञ्च 'द्वाविमौ पुरुषौ लोके' इत्यारभ्य 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति भगवद्गीतोक्त नित्यमुक्तबद्धत्रिविध चेतनव्यावृत्तस्वरूपं विवक्षितम्। तत्र हि कूटस्थशब्देन मुक्तो नित्यसिद्धश्च चेतन उच्यते, उभयोरपि प्राकृतविकारराहित्येनाक्षर कूटस्थशब्दवाच्यत्वात्। यद्यपि प्रशान्तशब्देन मुक्तव्यावृत्तिस्तथापि नित्यसिद्ध व्यावृत्तये नृहरिमित्युक्तम्। निरहमिति पाठे त्वनामरूपत्वे निरहं हेतुः अहमर्थान्निर्गतः अहंशब्देनाहङ्कारः प्रकृतिपरिणामविशेषः जीवश्चोच्यते आत्मनोऽप्यहमर्थत्वात्ततश्च निरहं प्रकृतिपुरुषगतविकारातीतं

हि यतस्तस्मादनामरूपमिति योजना बोध्या। एवं भूतं प्रपद्ये उपायोपेयभावेनाध्यवस्यामीत्यर्थः।

श्रीमज्जीवगोस्वामिचरणास्त्वेवं व्याचक्षते—स्वरूपज्ञानमाह यत्तदिति। यत्तत्प्रसिद्धं श्रीरामचन्द्रस्य दूर्वादलश्यामलं रूपम्। अत्र प्रकाशैकलक्षण वस्तुनः सूर्यादि ज्योतिषप्रकाशकत्वं शौक्ल्यादिमत्वमित्यादि धर्मवत् गुणरूपादिलक्षण तत्स्वरूपधर्मस्यापि तदात्मकत्वदृष्टया तन्मात्रत्वमुक्तम्। अतएवैकमपि तस्याश्च शक्तेर्मायातिरिक्तत्वमाह—स्वतेजसा ध्वस्त गुणव्यवस्थमिति। स्वरूपशक्त्यादूरीभूता त्रैगुण्यात्मिका मायाशक्तिर्यस्मादतः प्रशान्तं सर्वोपद्रवरहितम्। अनुभवमात्रत्वे हेतुः— प्रत्यक्दृश्यादन्यत् 'न चक्षुषा पश्यति रूपमस्य यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति श्रुतेः। तत्कुतः अनामरूपं 'एतास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति प्रसिद्ध प्राकृतनामरूप रहितं तत्र हेतुर्निरहमिति। आत्मशब्देन हि श्रुतावस्यां परमात्मनो जीवाख्यशक्तिरूपोंऽश उच्यते, अनेनेति पृथक् निर्देशात् तद्रूपेण च प्रवेशो नाम देवताशब्दवाच्य तेजोवारिमृल्लक्षणोपाध्यभिनिवेशः। स च तस्य जीवस्य तस्य तत्राहंताध्यासादेव भवति। ततोऽन्तर्यामिरूपेण स्वयं तत्र स्थितस्यापि तदध्यासाभावादुपाधिकृत् नामरूपराहित्यं युक्तमेवेत्यर्थः। सर्वथाहङ्काररराहित्ये सति व्याकरवाणीति प्रयोगस्यानर्हत्वादिति भावः। ननु श्रीरामरूपं न सर्वैरेवं प्रतीयते तत्राह—सुधियोपलम्भनम् शुद्धचित्तेन स्वरूपतयैवोप-

लभ्यत इत्यर्थः। 'नातः परम्परम! यद्भवतस्वरूपमि'– त्यादि श्रीब्रह्मवाक्यात्।

श्रीविश्वनाथचक्रवर्तिनेत्थं व्याख्यातम्–ननु शङ्खचक्रादिमत्त्व गरुड़वाहनत्वाद्यैश्वर्यानाविष्कारादवतारस्यास्य ब्रह्मत्वे केचित् संशेरते, तत्र ये संशेरते ते संशेरतां नाम, अहन्तु साक्षादिमं ब्रह्मरूपमेवानुभवामीत्याह-यदिति। विशुद्धो माया सम्बन्धशून्यो योऽनुभवस्तन्मात्रमेकं केवलं यत्तदेवेमं प्रपद्ये। ननु शुद्धजीवोऽप्येवं भवति तत्राह–स्वतेजसा स्वरूपशक्त्या दूरीभूता गुणव्यवस्थानरूपा मायाशक्तिर्यस्मात्तत्, अतएव प्रत्यक् दृश्यादन्यत् "न चक्षुषा पश्यति रूपमस्य, यमेवैष वृणुते तेनलभ्यः" इति श्रुतेः। यतः प्रशान्तं सर्वोपद्रवरहितम्। ननु श्रीरामरूपं नैवं प्रतीयते तत्राह– सुधियैव पुंसा उपलभ्यत इत्युपलम्भनम्। यतो नामरूपं "एतास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" प्रसिद्धप्राकृतनामरूपरहितम्। अतो तिस्रः इति तेजोवारिमृदः। निर्निश्चयेनाहं प्रपद्ये। यद्वा अहङ्काररहितं यथा स्यात्तथा तत्प्रपत्तिरपि कृपया तेनैव कारितेति बुद्ध्येत्यर्थः।

सिद्धान्त प्रदीपकारोप्याह– उक्तगुणगणनिधिं वेदान्तैकवेद्यं श्रीरामाख्यं ब्रह्मैव मुमुक्षुध्येमित्याह यदिति।

**मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः**
**कुतोऽन्यथा स्याद्रमतः स्व आत्मनः सीताकृतानि**
**व्यसनानीश्वरस्य ॥५॥**

अन्वयः– इह विभोः मर्त्यावतारः तु केवलं रक्षोवधाय एव न, (किन्तु) मर्त्यशिक्षणम्,अन्यथा स्वे (स्वरूपे) रमतः आत्मनः ईश्वरस्य सीताकृतानि व्यसनानि कुतः स्यात् (स्युः)।

**व्याख्या**—कथं तर्हि दशरथपुत्रत्वं तत्राह—विभोर्मर्त्यावतारस्तु रक्षसो रावणस्य वधाय तस्य मनुष्यादन्यतोऽवध्यत्वात्। न केवलमेतावत्किन्त्विह संसारे स्त्रीसङ्गादिकृतं दुःखं दुर्वारमिति मर्त्यानां शिक्षणं च शिक्षार्थमपीत्यर्थः। अन्यथा स्वे स्वरूपे रममाणस्य जगदात्मनः सीताकृतानि व्यसनानि कुतः स्यात् (स्युः) इति श्रीधरस्वामिनः। श्रीवीरराघवः श्लोकमिममित्थं व्याचख्यौ नन्वस्तु परस्य ब्रह्मणोऽनामरूपत्वम्, श्रीरामस्य त्वनामरूपत्वमित्ययुक्तं तस्य मनुष्य नामरूपभाक्त्वात्तत्राह-मर्त्येति। विभोः परस्यैव **ब्रह्मण** इह लोके श्रीरामरूपेण मर्त्यावतारः मनुष्यावतारः—अवतारो नामाजहत्स्वभावस्यैव रूपान्तरपरिग्रहः। एवञ्च परब्रह्मोहाजहत्स्वभावं मनुष्यसजातीयरूपं परिगृहीतवदिति भावः। किमवतारप्रयोजनं तत्राह—मर्त्यशिक्षणं मर्त्यानां संसारदोषज्ञापनेन धर्मसंस्थापनं साधुपरित्राणं प्रयोजनमिति भावः। ननु मर्त्यशिक्षणं नावतारप्रयोजनं किन्तु रावणादि रक्षोवध एवेत्यत्राह—रक्षोवधायैव न केवलमिति। विभोर्मर्त्यावतारो न केवलं रक्षोवधार्थमे अपितु मर्त्यशिक्षणमेव तस्य प्रधानं प्रयोजनमित्यर्थः। तथा चोक्तं भगवता—"परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥" इति, विनाशाय चेत्यत्र 'च' शब्दोऽन्वाचयपरः 'भिक्षामट गां, चानये'तिवत् दुष्कृतविनाशनमानुषङ्गिकं प्रयोजनमित्यर्थः। धर्मो नाम चातुर्वर्ण्य चातुराश्रम्य व्यवस्थयावस्थित ईश्वराराधनरूपपञ्चमहायज्ञादि, तस्य संस्थापनं संसारदोष ज्ञापनेन शिक्षणम्, दुष्कृत विनाशनं तु संकल्पमात्रेणाप्युपपद्यते। साधूनां-

शय्यासनाटनभोजनादिषु भगवता सह वर्तमानानां तं विना क्षण-मात्रमपि कल्पसहस्रं मन्वानानां दर्शन स्पर्शन संभाषणादिभिः परित्राणं सुखीकरणमवतारस्य मुख्य प्रयोजनम्। धर्मसंस्थापनञ्च संकल्पमात्रेणाप्युपपद्यत इति भावः। यदुक्तं मर्त्यशिक्षणार्थमेवावतार इति तदस्मिन्नेवावतारे निदर्शयति कुत इत्यादिना। अन्यथावतारस्य मर्त्यशिक्षणार्थत्वाभावे ईश्वरस्य 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।' इत्युक्त सर्वनियन्तुः दारापहर्तृरावणाद्यन्तरात्मतया दारापहरणादिकं कारयितुः स्वे स्वस्मिन्निरतिशयापरिछिन्नानन्दस्वरूपे आत्मनि रमतः उक्तविधस्वस्वरूपानुभवेन नित्य सन्तुष्टस्य विषयासक्तिरहितस्य सीताकृतानि सीताविश्लेषादिभिः कृतानि व्यसनानि दुःखानि कुतः कस्माद्धेतोः स्यात्। प्रत्येकाभिप्रायं स्यादित्येकवचनम्। कुतोऽन्यथा स्यू रमत इति पाठस्तु सुगमः। सर्वनियन्तुः सर्वान्तरात्मनः स्वानुभव सन्तुष्टस्य श्रीरामस्वरूपेणावस्थितस्य परब्रह्मणः सीताविश्लेषादिकृत व्यसनानुकरणं निरतिशयः दुःखावहः संसार इति लोकस्य प्रदर्शयितुमेव अन्यथोक्तविधस्य तस्य सीताकृतव्यसनादि न घटत इति भावः॥

अत्र तीर्थः– ननु श्रीरामस्य विशुद्धानुभवादि विशेषणानि कथं सङ्गच्छन्ते, सीतावियोगादिना दुःखाज्ञानादिप्रदर्शनादिति तत्राह–मर्त्येति। विभोर्व्याप्तस्य हरेर्मर्त्यावतारः मर्त्याकाररूपग्रहणं रक्षोवधायैव न केवलं तावन्मात्रं न भवति किन्तु मर्त्यशिक्षणम्, यमुद्दिश्य गुरोराज्ञाकरणं शरणागतपालनम-

भीष्टदानमित्यादि मर्त्यैः कर्तव्यमिति एतत्कुतोऽनेन कृतमिति ज्ञायते—इत्याशङ्क्य-दशरथाज्ञाकरणवनाभियान सीतान्वेषणादि-प्राप्तव्यसन शरणागत सुग्रीवाभीष्टकरण विभीषणराज्यदाना-दिभ्यांऽवगम्यत इत्याह कुत इति, स्वे आत्मनि स्वस्वरूपे रमतो रममाणस्य भगवतः 'कस्मिन्प्रतिष्ठत इति स्वे महिम्नि' इति श्रुतेः ।

श्रीमज्जीवगोस्वामिचरणाः श्लोकमिममित्थं व्याचख्युः-नन्वेम्भूतस्य मर्त्येषु प्राकट्ये किं प्रयोजनम् उच्यते-गौणे सत्यपि प्रयोजनान्तरे मुख्यं तु भक्तेषु लीलामाधुर्याभिव्यञ्जनमेवेत्याह मर्त्येति । तु शब्द आशङ्कानिवृत्यर्थः। मर्त्यलोके योऽवतार आवि-र्भाव स तु साधुजनोद्वेजक रक्षोवधायैव केवलं न भवति, किन्तु मर्त्यशिक्षणमपि मर्त्येषु शिक्षणं तत्तदर्थ प्रकाशनं यत्तन्मयमपि, तत्र बहिर्मुखेषु विषयासङ्गदुर्वारताप्रकाशनमानुषङ्गिकम्, मुख्य-मुद्देश्यन्तु स्वभक्तिवासनेषु चित्तार्द्रताकरविरहसंयोगमय निज-लीलाविशेषमाधुर्य प्रकाशनम् ततस्तदर्थमेवेत्यर्थः । अन्यथा यदि केवलं तद्वधायैव स्यात्तदा आत्मनः परमात्मत्वेन परिपूर्णस्य ईश्वरस्य सर्वान्तर्यामिणः स्वे स्वरूपे तदेकरूपे वैकुण्ठे च रममा-णस्य सीताकृतव्यसनानीति कुतः स्यात् । मनसैव तद्वधे शक्त-त्वात्तद् व्यसनासम्भवाच्च । निजमाधुर्यप्रकाशनपक्षे तु तत्तत् सम्भवत्येवेति भावः । अत्र कृपारूपं तादृशलीलारूपञ्च माधुर्य-मधिकं श्लाघितम् । तत्र श्रीसीतावियोगदुखञ्च लीलामाधुर्यान्त-र्गतमेवेति न दोष इत्यपि दर्शितम् ।

श्रीमद्विश्वनाथचक्रवर्तिभिस्तु श्लोकोऽयमित्थं व्याख्यातः- ननु तर्हि प्रपञ्च लोके प्राकट्य न केवलं रक्षसो रावणस्यैव वधाय किन्तु मर्त्यशिक्षणं मर्त्यशिक्षणार्थोऽपीत्यर्थः। मर्त्या द्विविधाः धर्मवन्तो भक्तिमन्तश्च तेभ्यः क्रमेण स्वस्य धार्मिकत्वप्रेमवश्यत्वयोः प्रदर्शनेन धर्मशिक्षणार्थं प्रेमशिक्षणार्थञ्चेत्यर्थः। अन्यथा स्वे स्वरूप एव रममाणस्य परमात्मनः सीताविरहकृतानि व्यसनानि दुःखानि कुतः स्यात्-स्युः। किन्तु साध्वी स्वभार्या धार्मिकैः सर्वथैव नोपेक्षितव्या, तदर्थं प्राप्तानि दुःखान्यपि सहेरन्नेवेति शिक्षणार्थं स्वस्मिन्नसन्त्यपि दुःखानि दर्शितानीति प्रथमः पक्षः। द्वितीयपक्षे तु सीता विरहकृतानि कुतो दुःखानि, किन्तु प्रेम्णः स्थायिभावस्य विप्रलम्भनरसास्वादनजनितानि दुःखत्वेन भासमानानि परमसुखान्येव न तु दुःखानीत्यर्थः। आत्मारामत्व दुःखित्वयोर्युगपदेकत्र विरोधात्। न च सीतायां रममाणस्य कुत आत्मारामत्वमितिवाच्यम्, सीतायाः स्वरूपशक्तित्वेनात्मभूतत्वात्। ननु सीतायाः स्वरूपभूतत्वे कथं तद्विरहः सम्भवेत्- उच्यते-

एकमेव परमतत्त्वं चिच्छक्तिवृत्तिभेदेन महासारेण प्रेमाख्येनानादित एव द्विधा विभक्तं तिष्ठति, ह्लादषडैश्वर्यमयं केवलं ह्लादमयं च। प्रथमं परमेश्वराख्यं द्वितीयं भक्त्याख्यम्। पुनश्च तेनैव प्रेम्णा स्वस्य चतसृभिर्वृत्तिभिर्द्वितीयं तत्त्वं चतुर्द्धा विभक्तं दाससखिपित्रादिप्रेयस्याख्यं प्रथमस्य तदेव तत्त्वस्य दास्यादिभावभावितत्वं व्यवस्थापितं प्राकृतेष्वपि जीवेषु यदृच्छयैतादृशभक्तिसाधनवत्सु भक्तिपरिपाके स्वयमाविर्भूय एतच्चतुष्कमावेश्य तेऽपि

दासादित्वेन यथाकालं प्राप्य चतुष्केण तेन समनुगम्यते। पुनरपि तेनैव प्रेम्णा स्थायिभावतां प्राप्तेन स्वशक्त्यैवाविर्भाविताभिर्विभावादिभिः स्वं रसरूपीकृत्य तदेव तत्त्वयुगलं स्वस्य विषयाश्रयीभावभावितं कृत्वा स्वाधीनीकृत्य योगवियोगाभ्यां सुखदुःखायितं स्वमाधुर्यमसाधारणमपारमास्वादयता कोऽप्यानन्दचमत्कार एव तद्विदां निष्पाद्यते। अतद्विदां तु केषाञ्चित् रामकृष्णादीनामप्येतावद्दुःखमनिर्वाच्यमिति केषाञ्चिज्जीव प्रदर्शनायै अनुकृतमित्येवं व्यामोह एव॥

अत्रेदं विभावनीयम्—मर्त्यावतारस्त्विहमर्त्यशिक्षणमित्यनेन अवतार प्रयोजनं निर्दिष्टम्। संसारे स्त्रीसङ्गादिकृतं दुःखं दुर्वारमिति मर्त्याणां शिक्षणार्थमवततार भगवान्, न केवलं राक्षसवधार्थमिति स्वामिचरणैर्व्याख्यातम्। श्रीवीरराघवाचार्येणापि श्रीधरस्वामिव्याख्यानमेव समर्थितम्। 'भ्रात्रा वने कृपणवत् प्रियया वियुक्तः स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार। स्त्रीपुंप्रसङ्ग एतादृक् सर्वत्र त्रासमावहः। अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः।' इत्यादिनवमस्कन्धोक्त श्लोकयोरप्यर्थः श्रीधरस्वामिप्रभृतिभिः पञ्चमस्कन्धोक्तरीत्यैव कृतः इत्यवधेयम्।

श्रीमज्जीवगोस्वामिचरणैस्तु पञ्चमनवमस्कन्धद्वयेऽपि मर्त्यशिक्षणस्य विलक्षण अर्थःकृतः। श्रीमद्विश्वनाथचक्रवर्तिभिस्तु श्रीमज्जीवगोस्वामि सरणिमनुसरताऽपि प्रसङ्गस्यास्य हार्दो भावः प्रकटीकृत इति रसिकाग्रेसरावुभावपि महापुरुषौ वन्दनीयौ अस्माभिरिति।

नवमस्कन्धस्थ भ्रात्रा वने कृपणवदिति प्रथमश्लोकस्य व्याख्यानं कुर्वता श्रीमज्जीवगोस्वामिचरणाः प्राहुः— अनेन प्रकारेण परमभक्तानुकम्पोद्दीपन प्रकारेण स्त्रीसङ्गिनां या गतिश्चेष्टा विलापाद्यांस्तामेव प्रथयन् विस्तारयन् चचार इतस्ततो बभ्राम इदमेवोक्तं प्रिययेति। श्रीमद्विश्वनाथचक्रवर्तिभिस्तु श्लोकोऽयमित्थं व्याख्यातः-रक्षोऽधमेन रावणेन वृकवत् वृकेणेव असमक्षं परोक्षत एवापयापितायाम् अपहृतायां सत्यां प्रियया प्रेमवत्या सीतया वियुक्तः विप्रलम्भशृङ्गाररसाश्रयालम्वनीभूतः। प्रेमाणमेव विप्रलम्भरसमयीभूतमास्वादयन् तदनुभावसात्विकसञ्चार्यादिकं विलापमूर्च्छोन्मादादिकं प्रकटयन्नेव चचार। कथम्भूतः ? इतीत्यनेन प्रकारेण स्त्रीसङ्गिनां विलापादिदुःखोदर्कां प्रथयन् वहिर्दर्शिनो जनान् प्रख्यापयन् अन्तर्दर्शिनस्तु गतिं प्रख्यापयन् इति प्रथामात्रमेतन्नतु वस्तुत इत्यर्थः। 'चिन्मयेऽस्मिन् महाविष्णौ जाते दशरथे हरौ' इति रामतापनी श्रुत्यादिप्रमाणेन चिदानन्दमय मनोबुद्धीन्द्रियशरीरस्य परब्रह्मणस्तस्य दुःखसम्भावनापि शास्त्रयुक्तिप्रतिकूलेति पञ्चमस्कन्धीय किम्पुरुषवर्षरामप्रसङ्ग व्याख्यान युक्त्या जानन्त्येव।'स्त्रीपुंप्रसङ्ग एतादृक् सर्वत्र त्रासमावहः' श्लोमिमं व्याचक्षाणाः श्रीमज्जीवगोस्वामिपादाः उक्तवन्तः—नन्वन्यत्रापि स्त्रीपुंसयोर्मिथः प्रसङ्गे तादृशत्वं दृश्यते, तत्राह स्त्रीति। एतादृक् किन्तु नेति काक्वर्थः। कुतः स हि ईश्वराणां कर्मयोगादिसिद्धानामपि सर्वत्र परत्र चेह च त्रासं संसारभयमावहति ग्राम्यस्य तु सुतरामेवेत्यर्थः। तयोस्त्वेष भावः सर्वपुरुषार्थाधिक प्रेमसारमय एवेति भावः। यद्वा काकुं

विनैवायमर्थः एतादृक् एतत्तुल्यत्वेन सम्भाव्यमानो यः स्त्रीपुंप्रसङ्गः स तु सर्वत्र त्रासमावह इति । त्रासमिति पुंभावश्चानुकूलमुद्वहतीतिवत् ।

श्रीविश्वनाथचक्रवर्तिनस्त्वेवं व्याचख्युः—अन्ये कामासक्ताः स्त्रियं स्मरन्तस्तु संसार एव मज्जन्तीत्याह, स्त्रीपुंसयोः प्रसङ्गः ईश्वराणां ब्रह्मादीनामपि सर्वत्र इह लोके परलोके च त्रासं संसारमावहतीति सः । प्रसङ्गस्य प्राकृतत्वात् काममूलकत्वाच्चेति भावः । एतदेवाह—एतादृक् एतयो रामसीतयोरिव दृष्टः केनचिदंशेन व्यावहारिकेणैव न तु तात्विकेन न त्वेतयोरपीत्यर्थः । प्रसङ्गस्याप्रकृतत्वात् प्रेममूलकत्वाच्चेति भावः। अतएवेश्वराणामिति न त्वीश्वरस्यापीत्युक्तम् । एवञ्च मर्त्यावतारस्त्विह मर्त्यशिक्षणमित्यनेन विविधान्यवतारप्रयोजनान्युक्तानि । मुख्यप्रयोजनन्तु भक्तेभ्यः लीलामाधुर्यरसप्रदानम्, गौणप्रयोजनानि धर्मरक्षणराक्षसविनाशादीनीति पूर्वमेव प्रतिपादितम् ।

अवतारस्वरूपं प्रयोजनञ्च व्याकुर्वन् ब्रवीति श्रीवीरराघवाचार्यः—'अवतारो नाम अजहत्स्वभावस्यैव रूपान्तर परिग्रहः' अनितरसाधारणं स्वसमाभ्यधिकशून्यं परब्रह्मणः यत्स्वरूप गुणस्वभावादिकं परधाम्नि चकास्ति तदेव स्वरूपगुणस्वभावादिकं गृहीत्वा लीलाविभूतौ भगवानवतरति । किञ्चावतारि स्वरूपापेक्षयावतारस्योत्कर्षः श्रुतिस्मृत्यादिषु प्रसिद्धः । 'स उ श्रेयान् भवति जायमानः' श्रुतिरियं अवतारोत्कर्षं प्रतिपादयति। तापनीया श्रुतिरप्याह—चिन्मयेऽस्मिन् महाविष्णौ जाते दशरथे हरौ । रघोः कुलेऽखिलं राति राजते यो महीस्थितः ॥ अत्र यथा

महीस्थितः दशरथप्राङ्गणे भगवान् राजते तथा दिव्य धाम्नि श्रीसाकेतेऽपि न राजते। वेदावतारे आभाणि महर्षिणा-'कौसल्या शुशुभे तेन पुत्रेणामिततेजसा' अत्रापि श्रीकौसल्याक्रोडक्रीड़ापरायणस्य श्रीरामस्य अमिततेजस्त्वं सुस्पष्टमेव। यद्यपि सौन्दर्यमाधुर्यलावण्य सौरस्य सौगन्ध्यसौकुमार्यादि गुणानां परधाम्नि सम्यगुपभोगः मुक्तैः क्रियते, किन्तु 'निरञ्जनः परमं साम्यमुपैति मम साधर्म्यमागताः' इत्यादि श्रुतिस्मृत्युक्त परमसाम्यापन्नानां नित्यमुक्तादि पार्षदानां मध्ये न कोऽपि दीनो भक्तः उपलभ्यते अतः दीनवत्सलाकारणकारुणिक पतित पावनत्वादि गुणानां परधाम्नि न कश्चनोपयोगो दृश्यते।

अत्र एकपाद्विभूतौ तु दीनपतित भक्तानां मध्ये तु सौन्दर्यमाधुर्यादिभिस्सह दीनवत्सलादिगुणानां सम्यगुपयोग इति विदितचरं रहस्यविदग्रेसराणाम्। किञ्चावतारचरितगानेनैव कृतार्थाः भारतीयाः दृश्यन्ते अन्यैश्च प्रशस्यन्ते च, यथाहि श्रीमद्भागवतेऽपि प्राह-'अहो भुवः सप्तसमुद्रवत्याः वर्षेषु सर्वेष्वधिपुण्यमेतत्। गायन्ति यत्रत्य जना मुरारेः कर्माणि भद्राण्यवतारवन्ति॥ इति। अथ च रावणो यदा लोकपितामहं सर्वामरत्वं वरं ययाचे—अथाब्रवीद् दशग्रीवः प्रहृष्टेनान्तरात्मना। प्रणम्य शिरसा देवं हर्षगद्गदया गिरा॥

भगवन् प्राणिनां नित्यं नान्यत्र मरणाद् भयम्।<br>नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे॥

तदा ब्रह्मा प्राह—

एवमुक्तस्तदा ब्रह्मा दशग्रीवमुवाच ह।
नास्ति सर्वामरत्वं ते वरमन्यं वृणीष्व मे ॥

तथोक्तवति लोकपितामहे रावणः प्रोवाच—

नहि चिन्ता ममान्येषु प्राणिष्वमरपूजित।
तृणभूता हि ते मन्ये प्राणिनो मानुषादयः ॥

तदभिमतं वरं ब्रह्मा तस्मै ददौ। मनुष्यादवध्यत्वं तेन न प्राप्तमतः मनुष्यरूपेणावतीर्य भगवान् श्रीरामः रावणं हतवान्।

अतएव रावणवधात् प्राक् स्वीयैश्वर्यगोपनार्थं स्वमाधुर्य-प्रकाशनार्थञ्च भगवता प्रयासः कृतः। वेदावतारे विवृतं महर्षिणा—जगज्जनन्याः श्रीजानक्या अग्निपरीक्षावसरे चतुरानन, पञ्चानन, महेन्द्र, वरुणादयः सर्वे देवाः राघवमभिजग्मुः। तेषां मध्ये लोकपितामहो ब्रह्मा राघवमुवाच— कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानवतां वरः। उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ॥ कथं देवगण श्रेष्ठमात्मानं नावबुद्धयसे ॥ इत्यादिना भगवतः श्रीरामस्य विभूतिरूपाणि वर्णितवान्।'नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तपेति'गीतोक्तरीत्या तद्विभूतीनामनन्तत्वेन सामस्त्येन वक्तुमशक्यत्वात्। प्राधान्येनाह लोकपितामहः— ऋतधामा वसुः पूर्वं वसूनां त्वं प्रजापतिः। त्रयाणां त्वं हि लोकानामादिकर्ता स्वयम्प्रभुः ॥ रूद्राणामष्टमो रूद्रः साध्यानामसि पञ्चमः ॥

अष्टमः महादेवाख्यः कैलाशवासी शङ्करोऽत्र विवक्षितः। पञ्चमो वीर्यवान्नाम साध्यानां त्वमसि। अश्विनौ चापि ते कर्णौ चन्द्रसूर्यौ च चक्षुषी। अन्ते चादौ च लोकानां दृश्यसे त्वं परन्तप!

इत्युक्तो लोकपालैस्तैः स्वामी लोकस्य राघवः। अब्रवीत् त्रिदशश्रेष्ठान् रामो धर्मभृतां वरः॥ आत्मानं मानुषं मन्ये रामं दशरथात्मजम्। योऽहं यस्य यतश्चाहं भगवांस्तद् ब्रवीतु मे॥ ब्रह्मादिभिः सामान्यतः स्तूयमानोऽपि सर्वदेवपूजनीयाच्चतुर्मुखात् स्वस्वरूपगुणविभूत्यादिकं स्वजनेषु प्रख्यापयितुं स्वसौशील्यं दर्शयति आत्मानमित्यादिना। 'आत्मानं मानुषं मन्ये'—परत्वापेक्षया मानुषत्वाभिनय एव ममाभिमतः इत्यर्थः। अत्रापि विशेषमाह राममिति। रामं रामनामकम् ततोऽप्यतिशयमाह दशरथात्मजमिति। अवतारापेक्षया चक्रवर्तिपुत्रत्वमेव प्रियतममिति भावः। स्वस्य सर्वदेवपारम्यं सामान्यजनैरनवगतमिति तत्प्रतिपत्त्यर्थं स्वस्वरूपं पृच्छति योऽहमित्यादिना। योऽहमिति स्वरूपप्रश्नः। यस्येति सम्वन्धिप्रश्नः। यत इति प्रयोजन प्रश्नः। 'भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुरि'त्यारभ्य 'प्रभवं निधनं वा ते न विदुः को भवानिति' पर्यन्तं भगवत्स्वरूपप्रश्नस्य समाधानं कृतम्। 'दृश्यसे सर्वभूतेषु ब्राह्मणेषु च गोषु च।' इत्यनेन सम्वन्धप्रश्नस्योत्तरमुक्तम्। 'सहस्रचरणः श्रीमान् शतशीर्षः सहस्रदृक्'इत्यारभ्य 'सीता लक्ष्मीर्भवान् विष्णुर्देवः कृष्णः प्रजापतिः। वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् यावत् प्रयोजनप्रश्नस्योत्तरमाह—लोकपितामहः इति।

अतः परं सर्गान्तं यावत् ब्रह्मस्तवस्य फलश्रुतिर्वर्णिता। 'योऽहं यस्य यतश्चाहं भगवांस्तद् ब्रवीतु मे' इत्यनेन भगवान् श्रीरामः ब्रह्माणं स्वैश्वर्यं प्रकटीयतुमादिदेश— 'भगवान् तद् ब्रवीतु' चक्रवर्तिपुत्रत्वमेव ममात्यन्तप्रियतमम् ममानभिमतमपि

परत्वं भवान् प्रकटयतु। समग्रलीलायां भगवता स्वैश्वर्यगोपनं कृतम्। सम्प्रति रावणवधेन अवतारकार्यं निष्पन्नं ज::मत: स्वैश्वर्यप्रकाशनाय ब्रह्मणे अनुमति: प्रदीयते। रावणवधात्पूर्वं यदि भगवान् स्वैश्वर्यमप्रकटयिष्यत्तदा पितामहवरदानं कथङ्कारं सत्यमभविष्यत्। ऐश्वर्यगोपनहेतुरयमपि बोध्य:। यद्यपि स्वैश्वर्यगोपने भगवान् दत्तावधानो दृष्टस्तथापि भक्तास्तु तदैश्वर्यं ज्ञातवन्त एव, अतएव श्रीयामुनाचार्येणोक्तम्—'उल्लङ्घितत्रिविधसीमसमातिशायिसंभावनं तव परिब्रढिमस्वभावम्। मायाबलेन भवताऽपि निगुह्यमानं पश्यन्ति केचिदनिशं त्वदनन्यभावा:।' गालवाश्रमस्थ स्वामि श्रीहर्य्याचार्येणापि स्वकीय श्रीरामस्तवराजभाष्ये प्रोक्तम्—श्रीमद्रामायणे त्रिवेणीनिगूढ सरस्वतीप्रवाहवदैश्वर्यं क्वचित्क्वचिद् व्यक्तम्। यथा त्रिवेणीसङ्गमे गङ्गायमुनयो: प्रवाहं सर्वे पश्यन्ति किन्तु सरस्वती प्रवाहं तु मर्मज्ञा: केचिदेव पश्यन्ति, तथैव श्रीमद्रामायणे श्रीसीतारामैश्वर्यं तु सर्वे पश्यन्ति, किन्तु माधुर्यं—तु रहस्यज्ञा: भक्ता एव पश्यन्तीति भाव:।

यद्यपि श्रीमद्रामायणे श्रीविश्वामित्रयज्ञरक्षणाहल्योद्धारशवधनुर्भङ्गपरशुरामपराजय जटायुमोक्ष सालभेदन समुद्रबन्धनकोसलवासिचराचरजीव परधामप्रदानादिभि: परत्वं प्रत्यपादि महर्षिणा, तथापि भगवदभिमतं माधुर्यस्वरूपप्रतिपादनं तु सर्वत्र दृश्यते। माधुर्यस्वरूपे मुग्धा: मुह्यन्ति भक्ता: रमन्ते।

'पञ्चस्तवीकारोऽप्याह—पृच्छामि किञ्चन यदा किल राघवत्वे मायामृगस्य वशगो मनुजत्वमौग्ध्यात्। सीता वियोगविवशो न च तद्गतिज्ञ: प्रादास्तदा परगतिं हि कथं खगाय।'

खगाय गृध्रराजाय मोक्षदानं श्रीमद्रामायणे वर्णितं महर्षिणा– 'या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः । अपरावर्तिनां या च या च भूमिप्रदायिनाम् । मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् । अपरावर्तिरत्र मोक्षः 'न स पुनरावर्तते' इति श्रुतेः । 'अब्धिं न तेरिथ न जिग्यिथ राक्षसेन्द्रं नैवास्य जज्ञिथ यदा च बलाबलं त्वम् । निस्संशयस्सपदि तस्य पदेऽभ्यसिञ्चस्तस्यानुजं कथमिदं हि विभीषणं च' एवं विविधान्यैश्वर्यबोधकानि चरितानि पञ्चस्तव्यां रसनीयानि ॥५॥

**न वै स आत्माऽऽत्मवतां सुहृत्तमः-**

**सक्तस्त्रिलोक्यां भगवान् वासुदेवः ।**

**न स्त्रीकृतं कश्मलमश्नुवीत-**

**न लक्ष्मणं चापि विहातुमर्हति ॥६॥**

अन्वयः–सः आत्मवताम् आत्मा च सुहृत्तमः भगवान् वासुदेवः त्रिकोक्यां न सक्तः,स्त्रीकृतं कश्मलं न अश्नुवीत लक्ष्मणं च अपि विहातुं न अर्हति ॥६॥

**व्याख्या**—श्रीधरस्वामी प्राह-विषयासक्त्यभावेन व्यसनानर्हत्वमुपपादयति– न वै स भगवान् त्रिलोक्यां क्वापि सक्तः, यतः आत्मवतां धीराणामात्मा सुहृत्तमश्च । अतो न स्त्रीकृतं मोहं प्राप्नुयात् । न लक्ष्मणं चेति– देवदूतेन श्रीरामं संमन्त्रयता विज्ञापितमत्रागतस्त्वया वध्य इति तदैव द्वारि स्थितं लक्ष्मणं दुर्वाससमागतं विज्ञापयितुं प्रविष्टं हन्तुमुद्यतो वशिष्ठवाक्यात्तत्याज तच्च न युज्यतेत्यर्थः । श्रीवीरराघवाचार्येणोच्यते– एतदेवोपपादयति नेति । स श्रीरामरूपेणावस्थितः परमात्मा

आत्मवतां प्रशस्तमनसां निर्धूतनिखिलसांसारिकधर्माणां सनकादीनामात्मा, सुहृत्तमः स्वाश्रितेषु निरतिशयसौहार्दनिष्ठः आश्रितानां निरतिशय प्रीतिविषयश्च। भगवान् ज्ञानशक्तिवलैश्वर्यादिषाड्गुण्य पूर्णः, वासुदेवः 'सर्वत्रासौ समस्तश्च वसत्यत्रेति वै यतः। ततोऽसौ वासुदेवेति विद्वद्भिः परिकीर्तितः।' इत्युक्तरीत्या सर्वत्रावस्थितोऽपि तद्गतदोषैरसंपृष्टः सर्वं स्वधार्यत्वेन स्वशेषत्वेन च परिगृहीतवांश्च, त्रिलोक्यां कृत्स्नजगदन्तर्भूते कस्मिंश्चिदपि शब्दादिविषयभूते वस्तुनि न सक्तः। वै शब्दोऽवधारणे, न सक्त एवेत्यर्थः। यतो न सक्त अतएव स्त्रीकृतं स्त्रीविश्लेषादिकृतं कश्मलं दुःखं नाश्नुवीत, अवतारस्य मर्त्यशिक्षणार्थत्वाभावे स्त्रीकृतं कश्मलमेवंभूतो न प्राप्नुयादेव। अन्यथेत्यस्य सर्वत्रानुषङ्गः, तथा लक्ष्मणं च शब्दात्सीतां च विहातुं त्यक्तुं नार्हति। निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणाद्युपयुक्तशरीरभेदैः शेषत्वं गतस्य भगवतो नित्यानपायिनस्त्यागः न तस्यावतारानुरूपः। 'भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते। अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते। कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते। कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते।' इति सर्वावस्थोचिताशेषशेषतैकरतिकृतनित्यकिङ्करतां प्रार्थयमानं लक्ष्मणम्। नित्यैवैषा जगन्माता लक्ष्मीर्नित्यानपायिनी। राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि। अन्येषु चावतारेषु विष्णोरेषानपायिनी' इत्युक्तविधां नित्यानपायिनीं लक्ष्म्यवताररूपां भगवतीं सीतां च मर्त्यशिक्षणमन्तरेण 'प्रियोऽहि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। मित्रभावेन सम्प्राप्तं न

त्यजेयं कथञ्चन । अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ।' इति वदन् कथं त्यक्तुमर्हति । अतः केवलं मर्त्यशिक्षणार्थं सांसारिक-पुरुषचेष्टामनुसृतवानित्यर्थः । श्रीसीतालक्ष्मणत्यागस्तु श्रीरामायणे उत्तरकाण्डे प्रसिद्धः ।

अत्रात्मवतामात्मेत्यनेन 'अमृतस्य तु नाशास्ति वित्तेन, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति वीतरागोपास्यत्वप्रतिपादक श्रुत्यर्थ प्रत्यभिज्ञानात्तस्य सर्गादिभिरकालुष्यं सूचितम् । अतएव स्त्रीसंयोगवियोगकृतसुख-दुःखाद्यभावश्चावेदितः । भगवानित्यनेन षाड्गुण्यपूर्णत्वोक्त्या-अवाप्तसमस्तकामोक्तिलाभात् स्त्रीसङ्गादिनिमित्तसुखानादरश्चोक्तः । सुहृत्तम इत्यनेन 'कथञ्चिदुपकारेण कृतेनैकेन तुष्यति न स्मरत्यपकाराणां शतमप्यात्मवत्तयेत्युक्तरीत्या दोषाननवेक्ष्य तारतम्यमनालोच्य उपकाराभासमवलम्ब्य स्वाश्रितमात्रेणा-परित्यजतो निरतिशयसुहृत्तमस्य मर्त्यशिक्षणमन्तरेण नित्यान-पायिनोः श्रीसीतालक्ष्मणयोस्त्यागो न घटत इत्युक्तं भवति ॥६॥

श्रीमज्जीवगोस्वामिचरणैरित्थं व्याख्यातम्—तादृशलीला च न प्राकृतवत् कामादिसक्ततया किन्तु स्वजनविशेषविषयककृपा-विशेषेणैवेत्याह न वै इति । स वै खलु त्रिलोक्यां न सक्तः, तत्र हेतुः आत्मा—परमात्मा, भगवान् परिपूर्णैश्वर्यादियुतः, वासुदेवः सर्वाश्रयश्चेति, किन्तु आत्मवतामात्मा स्वयमेव नाथत्वेन विद्यते येषां तेषां स्वविषयकममताधारिणां भक्तिविशेषाणामित्यर्थः । तेषामेव सुहृत्तमः तस्माद्यथान्ये स्त्रीकृतं स्त्रीहेतुकं कश्मलमश्नुवते तथा नासावश्नुवीत,अतस्तस्यात्मवत्वेनैव तादृशकश्मल-

हेतुतत्प्रीतिविषयतापीति भावः। तथा देवदूत समयातिक्रमेण आत्मवतोऽपि लक्ष्मणस्य परित्यागो यः स खलु नात्यन्तिक इत्याह न लक्ष्मणमिति। विहातुमपि नार्हति न शक्नोति, अनन्तरं झटित्येव स्वर्गस्थतया स्वागमनं प्रतीक्षमाणैस्तदादिभिः सह स्वधिष्ण्यारोहात्, अधुनापि श्रीसीतादिभिश्च सहैवास्मिन् किं पुरुषवर्षेऽप्यस्माभिर्दृश्यमानत्वात्। ततो मर्यादारक्षार्थमेव किञ्चित्तदनुकरणमिति भावः। ६।

श्रीमद्विश्वनाथचक्रवर्तिनो व्याचख्युरित्थम्--तस्य प्रेमवश्यत्वसत्यव्रतत्व ब्रह्मण्यत्वादिभिरप्राकृतैर्गुणैरेव एतदुपपद्यते नान्यथेत्याह नेति। स वै खलु त्रिलोक्यां न सक्तः यत आत्मा परमात्मा तदपि आत्मवतामात्मा सेव्यत्वेन वर्तते येषां तेषां दासादीनां सुहृत्तमः यतो भगवान् पूर्णषडैश्वर्यः अतः प्रेमवश्यत्वानङ्गीकारे प्राकृतानामिव स्त्रीकृतं कश्मलं मोहं नाश्नुवीत न प्राप्नुयात् तथैव सत्यव्रतत्व ब्रह्मण्यत्वाद्यनङ्गीकारे लक्ष्मणमपि त्यक्तुंनार्हेत्। तथाहि देवदूतेन श्रीरामं मन्त्रयता विज्ञापितम्-अत्रागतस्त्वया वध्य इति तदैव द्वारिस्थितं लक्ष्मणं दुर्वाससं विज्ञापयितुं प्रविष्टं हन्तुमुद्यतो वसिष्ठवाक्यात्तत्याजेति तस्मादेतादृश्या लीलया प्रेमाणं धर्मं च शिक्षयामासेति युक्तमुक्तं मर्त्यशिक्षणमिति ॥६॥

'न वै स आत्माऽऽत्मवतां सुहृत्तम' इत्यनेन जगदात्मनः श्रीरामस्य चराचरचेतनैस्सह शरीरात्मभावनिबन्धनमैक्यं सूचितम्। बृहदारण्यके याज्ञवल्क्य महर्षिणा सुस्पष्टमुक्तं यद् जगदात्मनः परब्रह्मणः सम्बन्धादेव जायापतिभ्रातृमातृपुत्रादिषु प्रियत्वम्। न वा अरे पत्युःकामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः

प्रियो भवति। न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति। एवं पुत्रवित्तलोकादीनि वस्तून्यप्यात्मनः कामायैव प्रियाणि भवन्तीत्यतः सर्वैरात्मसाक्षात्कारः कर्त्तव्यः।'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो-निदिध्यासितव्यः' इति।

ब्रह्मसूत्रेऽपि भगवता श्रीव्यासेन सूत्रितम्—
'आत्मेति तूपगच्छन्ति ग्राहयन्ति च।' उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथा आत्मा तथा स्वात्मनोऽपि परंब्रह्मेत्येवोपासीतेत्यर्थः। 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यादौ उपासितारः उपगच्छन्ति स्वीकुर्वन्ति। शास्त्राण्यपि—इममर्थमुपासितॄन् प्रत्युपपादयन्तीत्यर्थः 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद,यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' इति। तथा 'सन्मूलास्सौम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वम्, सर्वं खल्विदं ब्रह्म तज्जलानिति' च सर्वस्य चिदचिद्वस्तुनस्तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियाम्यत्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मा, अतस्स न आत्मा। यथा प्रत्यगात्मनस्स्वशरीरं प्रत्यात्मत्वात् 'देवोऽहं मनुष्योऽहम्, इत्यनुसन्धानं तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मनस्तस्याप्यहमित्येवानुसन्धानं युक्तमिति स्वामिश्रीरामानुजाचार्यैर्व्याख्यातम्।

वेदावतारेऽपि 'जगत् सर्वं शरीरं ते' इत्यनेन चराचरं जगत् श्रीरामस्य शरीरभूतं प्रतिपादितं महर्षिणा। यदि सर्वं जगत् श्रीरामस्य शरीरं तदा शरीरभूतसर्वजगतः श्रीरामः आत्मा

इति। यद्यपि श्रीरामः सर्वजगतः आत्मा किन्तु तत्त्वविद आत्मवन्तः महात्मान एव तमात्मानं जानन्ति न त्वतत्त्वविदः। अतएव श्रीरामायणे सर्वदा सद्भिरूपास्यः श्रीराम उक्तः। सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः। अतः युक्तमुक्तम् 'आत्मवतामात्मेति।'

**न जन्म नूनं महतो न सौभगं,**
**न वाङ् न बुद्धिर्नाकृतिस्तोषहेतुः।**
**तैर्यद्विसृष्टानपि नो वनौकस-**
**श्चकार सख्ये बत लक्ष्मणाग्रजः॥७॥**

अन्वयः—नूनम् महतः जन्म तोषहेतुः न सौभगं न वाक् न बुद्धिः न आकृतिः न यत् लक्ष्मणाग्रजः तैः विसृष्टान् अपि वनौकसः नः सख्ये बत चकार।

**व्याख्या**—श्रीधरस्वामिनोक्तम्—अतः श्रीराम एव सर्वैः सेव्यः इति वक्तुं न तस्य तोषहेतुः सत्कुलजन्मादि किन्तु भक्तिरेवेत्याह न जन्मेति। महतः पुरुषाज्जन्म महतः श्रीरामस्येति वा। सौभगं सौन्दर्यम् आकृतिर्जातिः। यद्यस्मात्तैर्जन्मादिभिर्विसृष्टांस्त्यक्तानपि नो वनचरान् बत अहो लक्ष्मणस्याग्रजोऽपि सखित्वे कृतवान्।७। श्रीवीरराघवाचार्याः व्याचख्युः— तारतम्यमनादृत्य यस्याश्रितत्वमात्रेण निरतिशयप्रीतिविशिष्टत्वरूपं तदस्मिन्नेवावतारे दर्शयति नेति। महतः शरणागतशब्दभाजं निहीनजन्मादिविशिष्टं पापीयांसमपि रक्षितुं बद्धदीक्षस्य श्रीरामरूपेणावस्थितस्य ब्रह्मणः जन्म विप्रादिजन्म न तोषहेतुः तथा सौन्दर्याध्ययनसुबुद्धिजातयो न तोषहेतवः तिर्यक्ष्वपि तस्यानुग्रहदर्शनादिति

भाव:। यस्मात्तैर्जन्मसौभगादिभि: विसृष्टान् परित्यक्तानपि नोऽस्मान् सख्ये चकार,जन्मादिकतारतम्यमनवेक्ष्य संश्रयमात्रेणास्माभिर्हीनै: सख्यं कृतवान् बताहो अस्य सुहृत्तमत्वमेवंविधमिति निर्वक्तुमशक्यमित्यर्थ:।

सन्दर्भमिममुपसंहरता श्रीमज्जीवगोस्वामिनोक्तम्– पूर्वार्थमेव स्थापयितुं भक्त्येककारणकारुण्यप्रमुखपरममाधुर्यं सर्वोर्ध्वमाह-द्वाभ्याम् 'न जन्मनूनम्'सुरोऽसुरो वेति' श्लोकाभ्याम्-महत: पुरुषाज्जन्म सौभगं सौन्दर्यं आकृतिर्जाति: यद्यस्मात् तै: जन्मादिर्भिविसृष्टान् त्यक्तान् नोऽस्मान् तदीयपरमभक्त श्रीसीतान्वेषणादिभक्तितुष्टत्वेन अहो बत श्रीलक्ष्मणस्य सर्वसद्गुणलक्षितस्य श्रीसुमित्रानन्दनस्याग्रजोऽपि सखित्वे कृतवान्, दासयोग्यानपि सह विहारादिना सखीनिव स्वीकृतवानित्यर्थ:।

श्रीविश्वनाथचक्रवर्तिनापि श्लोकोऽयमित्थमेव व्याख्यात: गोस्वामिश्रीगिरिधरलालमहाभागै: आभाणि–एवमैश्वर्यादिगुणवान् परमेश्वर एव चेद्रामस्तदा सत्कुलजन्मादिगुणवतामेव तद्भजनेऽधिकारो न जन्मादिगुणहीनानां तच्छून्यत्वेन तस्य सन्तोषाभावात् भजनस्य विफलत्त्वापत्तेरित्याशङ्क्य न सत्कुलजन्मादि तस्य सन्तोष हेतु:,किन्तु भक्तिरेव निरुपाधिकृपासमुद्रत्वात्, अत: सर्वै: स एव भजनीय इत्याह–नेति। नूनं निश्चितमेतत् महत: श्रीरामस्य सन्तोषहेतु:, सत्कुलजन्मादि न भवतीत्यर्थ:। कुत एवं निश्चितमित्यपेक्षायामाह तैर्यदिति। यत् यस्मात् लक्ष्मणस्य सत्कुलजन्माद्यनेकलक्षणविशिष्टस्य अग्रजोऽग्रजत्वेन तेन सेव्यमानोऽपि तैर्गुणैर्विसृष्टान् त्यक्तान् नोऽस्मान्

वनौकसो वानरान् सख्ये चकार सखित्वेनाङ्गीकृतवानित्यर्थः। ननु श्रीसीतान्वेषणादि कार्यार्थं सख्यं कृतवांस्तेन किमाश्चर्यमित्याशङ्क्य सर्वज्ञस्य सहायान्तरं विनैवानन्तब्रह्माण्डकर्तुरन्य सहायानपेक्षणात्, केवलं कृपैव सख्यकरणे हेतुर्नान्यदिति तत्कृपाया आश्चर्यमेवेत्याह—बतेति । जन्मसत्कुले, सौभगं सौन्दर्यम्,वाक्—वाङ्माधुर्यम्,बुद्धिर्बुद्धिनैपुण्यम्,आकृतिर्जातिः।७।

श्रीमद्रामायणे श्रीहनुमान् सर्ववेदशास्त्रसम्पन्नः ज्ञान वैराग्यभक्तिगुणालयश्चोक्तस्तथाहि-नानृग्वेदविनीतस्य नायजुर्वेद धारिणः नासामवेदविदुषः शक्यमेवं प्रभाषितुम् । नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् । बहुव्याहरताऽनेन न किञ्चिदपशब्दितम् । न मुखे नेत्रयोर्वापि ललाटे च भ्रुवोस्तथा । अन्येष्वपि च गात्रेषु दोषः संविदितः क्वचित्। अविस्तरमसन्दिग्धमविलम्बितमद्रुतम् । उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे । संस्कारक्रमसम्पन्नामद्रुतामविलम्बिताम् । उच्चारयति कल्याणीं वाचं हृदयहारिणीम् । अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया । कस्य नाराध्यते चित्तमुद्यतासेररेरपि ।' इत्यादि । जगज्जनन्या श्रीजानक्याऽपि युद्धकाण्डे श्रीहनुमानित्थं प्रशंसितः—

'तस्य तद्वचनं श्रुत्वा मैथिली जनकात्मजा । ततः शुभतरं वाक्यमुवाच पवनात्मजम् । अतिलक्षणसम्पन्नं माधुर्यगुणभूषितम् । बुद्ध्या ह्यष्टाङ्गया युक्तं त्वमेवार्हसि भाषितुम् । श्लाघनीयोऽनिलस्य त्वं पुत्रः परमधार्मिकः । बलं शौर्यं श्रुतं सत्वं विक्रमो दाक्ष्यमुत्तमम् । तेजः क्षमा धृतिर्धैर्यं विनीतत्वं न संशयः । एते चान्ये च

बहवो गुणास्त्वय्येव शोभनाः। इत्यादि। इमे श्लोकाः पूर्वमेव व्याख्याताः। उत्तरकाण्डेऽपि श्रीरामेण श्रीमन्मारुतियशोगानं कृतमिति व्याख्यातमेव।

अतः आनुकूल्यसंकल्प-प्रातिकूल्यवर्जन-रक्षणविश्वास-गोप्तृत्व-वरण–आत्मनिक्षेप कार्पण्येतिषड्विध प्रपत्तिमध्ये कार्पण्यमाश्रित्य श्रीमारुतिरुवाच–न जन्मनूनमिति ॥७॥

**सुरोऽसुरो वाप्यथ वानरो नरः,**
**सर्वात्मना यः सुकृतज्ञमुत्तमम्।**
**भजेत रामं मनुजाकृतिं हरिं,**
**य उत्तराननयत्कोसलान्दिवमिति ॥८॥**

अन्वयः–सुरः असुरः वा वानरः अथ अपि नरः वा यः सुकृतज्ञम् उत्तमम् मनुजाकृतिम् रामम् हरिम् सर्वात्मना भजेत यः उत्तरान् कोसलान् अनयत् दिवम् इति ॥८॥

**व्याख्या–**श्रीधरस्वामिना व्याख्यातम्–तस्मात् सुरो वाऽन्यो वा यः कोऽपि श्रीराममेव सर्वप्रकारेण भजेत। सुकृतज्ञमल्पीयस्यपि भजने बहुमानिनम्। उत्तरकोसलानयोध्यावासिनः।८। श्रीवीरराघवाचार्यो व्याचख्यौ–यत एव निरतिशय सुहृत्तमस्ततस्तन् मनुजाकृतिं मनुष्याकारं श्रीहरिं सुकृतमुपकाराभिज्ञं मय्येव जीर्णतां यातु यत्त्वयोपकृतं कपे! नरः प्रत्युपकाराणामापात्स्वायाति पात्रताम्' इति मां प्रत्युक्तविधोपकाराभिज्ञं पुरुषोत्तमं श्रीरामं सुराऽसुर नराणां मध्ये यः कश्चित्सर्वात्मना सर्वप्रकारेण केनापि तदीयता सम्पादन प्रकारेणेति यावत् भजेत,

कथं तन्मात्रेणैव तमनुगृह्णातीत्यत्राह—यः श्रीरामः उत्तरकोसलानुत्तरकोसलस्थान् लोकान् तरूगुल्मलतादींश्च स्वदेशवासित्वमात्रमवलम्ब्य दिवं स्वर्गमनयत् प्रापितवान् ।

न केवलं ज्ञानक्रियाभक्तियोगानेवापेक्ष्यानुगृह्णात्यपितु यत्किञ्चिद् व्याजमात्रमवलम्ब्यानुगृह्णात्ययं श्रीराम इति भावः। तथा चोक्तम् श्रीवत्साङ्कमिश्रैः 'त्वामामनन्ति कवयः करुणामृताब्धे ! ज्ञानक्रियाभजनलभ्यमलभ्यमन्यैः । एतेषु केन वरदोत्तरकोसलस्थाः पूर्वंसदूर्वमभजन्त हि जन्तवस्त्वाम् इति ।८। श्रीमज्जीवगोस्वामिचरणास्त्वेवं व्याचक्षते—तस्मात्सुर इति । पूर्वं स्वरूपज्ञानमयभक्त्या मनुजाकृतावेव परमस्वरूपं दर्शितवान्। सम्प्रति माधुर्यज्ञानमयभक्त्यापि विशिष्य तामेवावधारयति मनुजाकृतिं हरिमिति । तत्रापि कपिलादिकं व्यावर्तयति—राममिति । उत्तममसमोर्ध्वगुणं सुकृतज्ञं स्वल्पयापि भक्त्या सन्तुष्यन्तम् ।

श्रीमद्विश्वनाथचक्रवर्तिनः प्राहुः—तस्माद्भजनीयेषु सर्वेष्वतारेषु मध्ये श्रीराम एव कृपासिन्धुरतिशयेन भजनीयो यद्भजने सर्व एवाविशेषेणाधिकारीत्याह—'सुर' इति । यः कोऽपि सर्वात्मना सर्वप्रकारेण उत्तरान् कोसलान् अयोध्यावासिनः सशरीरानेव दिवं वैकुण्ठमनयत् ।

'सुरोऽसुरो वाप्यथवा नरोनरः'इति चरमश्लोकेन सन्दर्भमिमं समापयन् श्रीबादरायणः श्रीमद्भागवतसिद्धान्तमपि वर्णयामास । भजेत राममिति राद्धान्तो निरूपितः । श्रीरामभजने सर्वे सुरासुरनरवानरादयः अधिकारिणः ।

'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि। इति राम-पदेनासौ परंब्रह्माभिधीयते' इति तापनीयाश्रुतिरभिधावृत्त्या श्रीरामं सच्चिदानन्दात्मकं परब्रह्म प्रतिपादयति। मनुजाकृति मित्यनेन सौलभ्यमुक्तम्। विवृतं वेदावतारे महर्षिणा 'स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः। अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः॥' इत्यनेन परब्रह्मणः श्रीरामस्य सौलभ्यं वर्णि-तम्। मानुषे लोके श्रीरामो जज्ञे, अवततार। यत्र देवा अपि मनुष्यगन्धमसहमानाश्छर्दन पूर्वकं कुत्सयन्तो योजनादुपरि स्थि-त्वा हविराददते। तस्मिन् मानुषे लोके श्रीरामो जज्ञे, हन्त किमिदं सौलभ्यमिति भावः। हरिमिति सर्वदुःखहर्तारं श्रीरामं भजेतेत्यर्थः। भक्तचित्तापहारिणं हरिमिति वा। 'रूपौदार्य गुणैः पुंसां दृष्टिचित्तापहारिणमित्यनेन' कठिनचित्तानां पुंसामपि श्रीरामः दृष्टिचित्तापहारकः श्रीराम इत्यभाणि महर्षिणा। अत्र श्रीगोविन्दराजो ब्रूते—पुंसामिति कठिनचित्तानामपि किमुत स्त्रीणामिति भावः। यद्वा पुंशब्देन स्त्रीपुंससाधारणमात्ममात्रमुच्यते, 'स्त्रीप्रायमितरत्सर्वं पुमानेको व्यवस्थितः इति श्रीविष्णुपुराणे प्रयोगात्। तेन सुरनरतिर्यं-गादि भेदभिन्नानां स्त्रीपुन्नपुंसक भेदभिन्नानां सर्वेषां दृष्टिचित्ता-पहार उक्तः। वक्ष्यति श्रीरामविरहे स्थावरजंगम वस्तुमात्रं परिम्लानमिति। तथाहि—

'विषये ते महाराज रामव्यसनकर्षिता।
अपि वृक्षाः परिम्लानाः सपुष्पांकुरकोरकाः॥
उपतप्तोदका नद्यः पल्वलानि सरांसि च।
परिशुष्कपलाशानि वनान्युपवनानि च॥

न च सर्पन्ति सत्त्वानि व्याला न प्रचरन्ति च ।
रामशोकाभिभूतं तन्निष्कूजमभवद्वनम् ॥
लीनपुष्करपत्राश्च नरेन्द्र कलुषोदकाः ।
संतप्तपद्माः पद्मिन्यो लीनमीनविहङ्गमाः ॥
जलजानि च पुष्पाणि माल्यानि स्थलजानि च ।
नाद्य भान्त्यल्पगन्धीनि फलानि च यथापुरम् ॥
अत्रोद्यानानि शून्यानि प्रलीनविहगानि च ।
न चाभिरामानारामान् पश्यामि मनुजर्षभ ॥' इत्यादि

श्लोकैः श्रीरामविरहे चराचरजीवानां म्लानता वर्णिता। अत्र श्रीरामस्य चराचरजीवहृदयहारित्वरूपं सुस्पष्टं वर्णितम्। मनुजाकृतिं हरिमित्यत्र हरिशब्दस्य सर्वहृदयहारित्वरूपार्थोऽप्यत्र निरूपितः। इत्थं हरिशब्दस्य सर्वक्लेशहर्तृत्व सर्वहृदयहर्तृत्वरूपार्थद्वयमवगन्तव्यम्। य उत्तरानानयत्कोसलान्दिवमित्यनेन श्रीरामस्यासाधारणमैश्वर्यमुक्तम्। मोक्षप्रदत्वमेव भगवत असाधारणमैश्वर्यं पूर्वाचार्याः प्राहुः। तच्च कोसलदेशवासिजनमोक्षप्रदानेन सम्यग् व्यक्तमुत्तरकाण्डे।

प्रभातायां तु शर्वर्यां पृथुवक्षाः महायशाः ।
रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् ॥
अग्निहोत्रं व्रजत्वग्रे दीप्यमानं सहद्विजैः ।
वाजपेयातपत्रञ्च शोभमानं महापथे ॥
ततो वसिष्ठस्तेजस्वी सर्वं निरवशेषतः ।
चकार विधिवद्धर्मं महाप्रास्थानिकं विधिम् ॥

ततः सूक्ष्माम्बरधरो ब्रह्मामवर्तयन् परम् ।
कुशान् गृहीत्वा पाणिभ्यां प्रसज्य प्रययावथ ॥
अव्याहरन् क्वचित् किञ्चिन्निश्चेष्टो निस्सुखः पथि ।
निर्जगाम गृहात्तस्माद्दीप्यमान इवांशुमान् ॥
रामस्य दक्षिणे पार्श्वे सपद्मा श्रीरूपाश्रिता ।
सव्ये तु ह्रीर्महादेवी व्यवसायस्तथाऽग्रतः ॥
शरा नाना विधाश्चापि धनुरायतमुत्तमम् ।
तथाऽऽयुधानि ते सर्वे ययुः पुरुषविग्रहाः ॥
वेदा ब्राह्मणरूपेण गायत्री सर्वरक्षिणी ।
ओङ्कारोऽथ वषट्कारः सर्वे राममनुव्रताः ॥
ऋषयश्च महात्मानः सर्व एव महीसुराः ।
अन्वगच्छन् महात्मानं स्वर्गद्वारमपावृतम् ॥
तं यान्तमनुगच्छन्ति ह्यन्तःपुरचराः स्त्रियः ।
सवृद्धबालदासीकाः सवर्षवरकिङ्कराः ॥
सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययौ ।
रामं गतिमुपागम्य साग्निहोत्रमनुव्रतः ॥
ते च सर्वे महात्मानः साग्निहोत्राः समागताः ।
सपुत्रदाराः काकुत्स्थमनुजग्मुर्महामतिम् ॥
मन्त्रिणो भृत्यवर्गाश्च सपुत्रपशुबान्धवाः ।
सर्वे सहानुगा राममन्वगच्छन् प्रहृष्टवत् ॥
ततस्सर्वाः प्रकृतयो हृष्टपुष्ट जनावृताः ।
गच्छन्तमन्वगच्छंस्तं राघवं गुणरञ्जिताः ॥

ततः सस्त्रीपुमांसस्ते सपक्षीपशुवाहनाः ।
राघवस्यानुगाः सर्वे हृष्टा विगतकल्मषाः ॥
स्नाताः प्रमुदिताः सर्वे हृष्टा पुष्टाश्च वानराः।
दृढं किलकिलाशब्दैः सर्वं राममनुव्रतम् ॥
न तत्र कश्चिद् दीनो वा व्रीडितो वाऽपि दुःखितः।
हृष्टं प्रमुदितं सर्वं बभूव परमाद्भुतम् ॥
द्रष्टु कामोऽथ निर्यान्तं रामं जानपदो जनः ।
यः प्राप्तः सोऽपि दृष्ट्वैव स्वर्गायानुगतो मुदा ॥
ऋक्षवानररक्षांसि जनाश्च पुरवासिनः ।
आगच्छन् परया भक्त्या पृष्ठतः सुसमाहिताः॥
यानि भूतानि नगरेऽप्यन्तर्धान गतानि च ।
राघवं तान्यनुययुः स्वर्गाय समुपस्थितम् ॥
यानि पश्यन्ति काकुत्स्थं स्थावराणि चराणि च ।
सर्वाणि रामगमने ह्यनुजग्मुर्हि तान्यपि ॥
नोच्छ्वसत्तदयोध्यायां सुसूक्ष्ममपि दृश्यते ।
तिर्यग्योनिगताश्चापि सर्वे राममनुव्रताः ॥

अस्मिन् सर्गे महर्षिणा भक्तैस्सह श्रीरामस्य परधामगमनं वर्ण्यते—राजीवलोचनः श्रीरामः पुरोहितमब्रवीत्—यत् ब्राह्मणैस्सह दीप्यमानं ममाग्निहोत्रं अग्रे व्रजतु तथा साकेतमार्गे वाजपेयातपत्रमपि अग्रे व्रजतु। श्रीवसिष्ठः महाप्रास्थानिकं धार्मिकविधिं विधिवच्चकार। तदनन्तरं सूक्ष्माम्बरधरः श्रीरामः पाणिभ्यां कुशान् गृहीत्वा वेदमन्त्रमुच्चारयन् सरयूतटं प्रययौ। भगवतः श्रीरामस्य दक्षिणे पार्श्वे पद्महस्ता श्रीर्लक्ष्मीः समुपस्थिता।

वामपार्श्वे भूदेवी विरराज तथाऽग्रतः संहारशक्तिर्ययौ 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रुतेः। श्रुतौ ह्रीर्मही,व्यवसायो व्यवसाय-शक्तिः संहारशक्तिरुच्यते इति नागेशभट्टः । शिरोमणिकारः अब्रवीत्-पद्मा भरतस्य स्त्री, श्रीः क्षीराब्धीश लक्ष्मणस्य स्त्री, श्रीरामस्य दक्षिणे पार्श्वे समुपाश्रिता महीदेवी, भूमनारायण शत्रुघ्नस्त्री सव्ये समुपाश्रिता, व्यवसायः रामस्य शक्तिस्तु अग्रतः समुपाश्रितः, लिङ्गविपरिणामेनान्वयः। नाना-विधाः सराः उत्तमं विशालं धनुः तथाऽयुधानि ते सर्वे पुरुषविग्र-हास्सन्तो ययुः । संहारशक्तिसहकारिणामपि मूर्त्ततयोपासकत्व-माह सरा इति, एवं रौद्रशक्तिसेवा दर्शिता इति अथ हैरण्यगर्भ-शक्ति सेवां दर्शयति । वेदा इति । गायत्री सर्वरक्षिणी सर्ववेद-तन्मूल यज्ञयागाधिकृताशेष जगद्रक्षिका तस्या अपि मूलमोङ्का-रोप्यनुगतः। अनेन सर्वज्ञानयोगो दर्शितः। वषट्कारः कर्मयोगः, ब्राह्मणरूपेण वेदाः ते सर्वे राममनुव्रताः इति तिलककारः ।

अपावृतं मायावरणरहितं स्वर्गद्वारं साकेतप्राप्तिसाधकं-महात्मानं रामं ऋषिप्रभृतयोऽन्वगच्छन्, अन्तःपुरचर्यः स्त्रियः, वालवृद्धदासीवर्षवरकिङ्करादयः श्रीरामं सरयूमनुगच्छन्तमनु-जग्मुः । शत्रुघ्नसहितः सान्तःपुरः भरतः श्रीराममनुजगाम । साग्निहोत्राः सपुत्रदाराः सर्वे ब्राह्मणा अपि श्रीराममनुजग्मुः । मंत्रिभृत्यवर्गादयः सपुत्र पशुबान्धवाः सर्वे प्रहृष्टाः राममन्व-गच्छन् । धामगमनसमये समीपावस्थानजः प्रहर्षः अवगन्तव्यः। श्रीरामगुणरञ्जिताः गुणानुरक्ताः सपक्षिपशुबान्धवाः सस्त्री-पुमांसः विगतकल्मषा हृष्टास्सन्तः सर्वे राममनुजग्मुः ।

स्नाताः प्रमुदिताः सर्वे वानरा अपि किलकिला शब्दैः हर्षं प्रकटयन्तः श्रीराममनुजग्मुः । तेषां मध्ये न कोऽपि दीनः, न कोऽपि व्रीडितः दुःखितः वाऽसीत् । पूर्वकृत भगवदपराधादिना व्रीडा नाऽसीदित्यर्थः। अयोध्यानगरे अन्तर्धान गतानि यानि भूतानि आसन् तानि सर्वाणि साकेतगमनाय उद्यतं श्रीराघवमनुजग्मुः । अन्तर्धानगतानि भूतप्रेतपिशाचादीनि भद्रकाल्यादीनि चेति नागेशभट्टः । स्थावराणि चराणि च राममनुजग्मुः । स्थावराणामनुगमनं भगवतो रामस्य सदयावलोकनेन तदानीं ज्ञानक्रियाशक्त्युद्भवादुपपद्यते । तिर्यग्योनिगता अपि सर्वे राममनुव्रता बभूवुः। अतएव यदुच्छ्वसत्श्वासं गृह्णत् सप्राणमित्यर्थः तत्सूक्ष्ममपि अननुयातमयोध्यायां न दृश्यते ।

अध्यर्धयोजनं गत्वा नदीं पश्चान्मुखाश्रिताम् ।
सरयूं पुण्यसलिलां ददर्श रघुनन्दनः ॥
तां नदीमाकुलावर्तां सर्वत्रानुसरन्नृपः ।
आगतः सप्रजो रामस्तं देशं रघुनन्दनः ॥
अथ तस्मिन् मुहूर्ते तु ब्रह्मा लोकपितामहः ।
सर्वैः परिवृतो देवैऋर्षिभिश्च महात्मभिः ॥
आययौ यत्र काकुत्स्थः स्वर्गाय समुपस्थितः ।
विमानशतकोटीभिर्दिव्याभिरभिसंवृतः ॥
दिव्यतेजोवृतं व्योम ज्योतिर्भूतमनुत्तमम् ।
स्वयम्प्रभैः स्वतेजोभिः स्वर्गिभिः पुण्यकर्मभिः ॥
पुण्या वाता ववुश्चैव गन्धवन्तः सुखप्रदाः ।
पपात पुष्पवृष्टिश्च देवैर्मुक्ता महौघवत् ॥

तस्मिंस्तूर्यशतैः कीर्णे गन्धर्वाप्सरसंकुले ।
सरयूसलिलं रामः पद्भ्यां समुपचक्रमे ॥
ततः पितामहो वाणीमन्तरिक्षादभाषत ।
आगच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोऽसि राघव ॥
भ्रातृभिः सह देवाभैः प्रविशस्व स्विकां तनुम् ।
यामिच्छसि महाबाहो तां तनुं प्रविश स्विकाम् ॥
वैष्णवीं तां महातेजस्तद्वाकाशं सनातनम् ॥
त्वं हि लोकगतिर्देव न त्वां केचित् प्रजानते ।
ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम् ॥
त्वामचिन्त्यं महद्भूतमक्षयं सर्वसङ्ग्रहम् ॥
यामिच्छसि महातेजस्तां तनुं प्रविश स्वयम् ।
पितामहवचः श्रुत्वा विनिश्चत्य महामतिः ॥
विवेश वैष्णवं तेजः सशरीरः सहानुजः ॥
ततो विष्णुमयं देवं पूजयन्ति स्म देवताः ।
साध्या मरुद्गणाश्चैव सेन्द्राः साग्निपुरोगमाः ॥
ये च दिव्या ऋषिगणा गन्धर्वाप्सरसश्च याः ।
सुपर्णनागयक्षाश्च दैत्यदानवराक्षसाः ॥
सर्वं पुष्टं प्रमुदितं सुसम्पूर्णं मनोरथम् ।
साधु साध्विति तैर्देवैस्त्रिदिवं गतकल्मषम् ॥
अथ विष्णुर्महातेजाः पितामहमुवाच ह ।
एषां लोकं जनौघानां दातुमर्हसि सुव्रत ॥
इमे हि सर्वे स्नेहान्मामनुयाता मनस्विनः ।
भक्ता हि भजितव्याश्च त्यक्तात्मानश्च मत्कृते ॥

तच्छ्रुत्वा विष्णुवचनं ब्रह्मा लोकगुरुः प्रभुः ।
लोकान् सान्तानिकान्नाम यास्यन्तीमे समागताः ॥
यच्च तिर्यग्गतं किंचित्त्वामेवमनुचिन्तयत् ।
प्राणांस्त्यक्ष्यति भक्त्या वै तत् सन्ताने निवत्स्यति ॥

सर्वैर्ब्रह्मगुणैर्युक्ते ब्रह्मलोकादनन्तरे ।
वानराश्च स्विकां योनिमृक्षाश्चैव तथा ययुः ॥
येभ्यो विनिस्सृताः सर्वे सुरेभ्यः सुरसम्भवाः ॥

तेषु प्रविविशे चैव सुग्रीवः सूर्यमण्डलम् ।
पश्यतां सर्वदेवानां स्वान् पितृन् प्रतिपेदिरे ॥

तथोक्तवति देवेशे गोप्रतारमुपागताः ।
भेजिरे सरयूं सर्वे हर्षपूर्णाश्रुविक्लवाः ॥
अवगाह्य जलं यो यः प्राणी ह्यासीत् प्रहृष्टवत् ।
मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत ॥
तिर्यग्योनिगतानां च शतानि सरयूजलम् ।
सम्प्राप्य त्रिदिवं जग्मुः प्रभासुर वपूंषि च ॥
दिव्यादिव्येन वपुषा देवा दीप्ता इवाभवन् ॥

गत्वा तु सरयूतोयं स्थावराणि चराणि च ।
प्राप्य तत्तोयविक्लेदं देवलोकमुपागमन् ॥
तस्मिन्नपि समापन्ना ऋक्षवानरराक्षसाः ।
तेऽपि स्वर्गं प्रविविशुर्देहान्निक्षिप्य चाम्भसि ॥
ततः समागतान् सर्वान् स्थाप्य लोकगुरुर्दिवि ।
जगाम त्रिदशैः सार्धं सदा हृष्टैर्दिवं महत् ॥

अस्मिन् सर्गे श्रीरामः स्वस्वरूपं प्राप्य पश्चात् सर्वजन्तून् सान्तानिकलोकं प्रापयामासेति वृत्तं सुविशदं वर्ण्यते। अर्धाधिकं योजनं अध्यर्धयोजनम्। पश्चान्मुखाश्रितां पुण्यसलिलां सरयूनदीं श्रीरघुनन्दनः ददर्श। पश्चिमाभिमुखस्थितेन स्वेन आश्रिताम् सरयूमर्धाधिकयोजनं गत्वा ददर्श तच्छोभामवलोकयामासेत्यर्थः। सरयूं पुण्यसलिलामित्यनेन सरय्वाः साक्षाद् ब्रह्मद्रवत्वं सूचितम्। श्रीमद्रामायणे महर्षि विश्वामित्रः श्रीरामं प्राह—'कैलाशपर्वते राम! मनसा निर्मितं सरः। ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः॥ तस्मात्सुस्राव सरसः साऽयोध्यामुपगूहते। सरः प्रवृत्ताः सरयूः पुण्या ब्रह्मसरश्च्युता॥ उपगूहते—आवृत्य प्रवहते। सरसो यौतीति सरयूः, सरसो यातीति सरयूः वा। श्रीरूद्रयामले श्रीशिवपार्वतीसंवादे श्रीअयोध्यामाहात्म्ये विस्तरेण श्रीसरय्वाः प्राकटच वर्णितम्। तत्र वासिष्ठी, रामगङ्गा,नेत्रजा,मानसनन्दिनी प्रभृतीनि सरयू नामानि कथितानि। सरयूमाहात्म्यमुपसंहरता शिवेनोक्तम्—

'मन्वन्तरसहस्रैस्तु काशीवासेन यत्फलम्।
तत्फलं समवाप्नोति सरयूदर्शने कृते॥
प्रयागे यो नरे गत्वा मासद्वादशकं वसेत्।
तत्फलं समवाप्नोति सरयूदर्शने कृते॥
गया श्राद्धं च यः कुर्यात् पुरुषोत्तमदर्शनम्।
तत्फलादधिका प्रोक्ता कलौ दाशरथी पुरी॥
मथुरायां कल्पमेकं वसते मानवो यदि।
तत्फलं समवाप्नोति सरयूदर्शने कृते॥

या गतिर्योगयुक्तानां वाराणस्यां तनुत्यजाम् ।
सा गतिः स्नानमात्रेण सरय्वां हरिवासरे ॥
पुष्करे तु नरो गत्वा कार्तिक्यां कृत्तिकादिने ।
तत्फलं समवाप्नोति सरयूदर्शने कृते ॥
कल्पकोटिसहस्राणि ह्यवन्तौ वासमुत्तमम् ।
तत्फलं समवाप्नोति सरयूदर्शने कृते ॥'
अयोध्या च परंब्रह्म सरयू सगुणः पुमान् ।
तन्निवासी जगन्नाथः सत्यं सत्यं वदाम्यहम् ॥ इत्यादि

एवं पुण्यसलिलां सरयूं श्रीरघुनन्दनः ददर्श । तं देशम्—स्वर्गप्रापकं देशमिति नागेश भट्टः । तमप्रकटसाकेतप्रापकं देशं गोप्रतारमिति शिरोमणिकारः । तस्मिन्मुहूर्ते लोकपितामहः ब्रह्मा सर्वैर्देवैः ऋषिभिः परिवृतः तत्राजगाम यत्र श्रीरामः स्वर्गं गन्तुं समुपस्थित आसीत् । स्वर्गिभिः पुण्यकर्मिभिः व्योम दिव्यतेजोवृतमासीत् । गन्धवन्तः पुण्या वाता ववुः । देवैर्मुक्ता पुष्पवृष्टिः पपात । अनेकतूर्यैर्ध्वनिभिः व्याप्ते गन्धर्वाप्सरोभिस्संकुले तस्मिन् समये श्रीरामः सरयूसलिलं समुपचक्रमे । ततः पितामह अन्तरिक्षात्समीपमागत्य वक्ष्यमाणां वाणीमभाषत । हे विष्णो ! लोकानुग्रहाय गृहीतविष्णुशरीर! राघव! दिष्टया प्राप्तोऽसि अस्मद्भाग्यवश्येन भ्रातृभिस्सह सम्प्राप्तोऽसि अत स्वकामात्मीयां तनुं तनूवत्प्रियं धामेत्यर्थः । प्रविशस्व—प्रविश । व्यापक व्यापक इति शिरोमणिकारः । अत्र नागेशभट्टः—'भ्रातृभिस्सह देवाभैः प्रविशस्व स्विकां तनुमित्यस्य' व्याख्यानावसरे प्राह—तदर्थश्च देवाभैर्देवस्य तव सदृशैर्भ्रातृभिः सहस्विकां तनुं तनुवदत्यन्त

प्रियं लोकं प्रविश । अत्र भ्रातृभिरिति बहुवचनेन लक्ष्मणस्यापि तदानीं तत्रागमनं सूचयतीति तीर्थः । कतकस्तु यद्यपि शत्रुघ्न एक एव सह गच्छति तथापि पुरोगतस्य सह गच्छतः पश्चादागमिष्यतश्च भ्रातुस्तत्र प्रवेशः सामान्येनाद्यतन प्रवेश इत्युच्यते इति न विरोध इति व्याचख्यौ । भगवद्धामगमनदर्शनपर्यन्तमिति च पूर्वसर्गे 'सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययौ ॥ इति पद्ये व्याख्याति स्म च । तत्र भरतस्य पश्चाद्गमने मूलमन्वेष्टव्यम् पूजायां बहुवचनमित्यन्ये । शिरोमणिकारोऽप्याह—श्रीरामप्रवेशनं सम्प्रार्थ्य श्रीरामेण सहागतानां प्रवेशं प्रार्थयन्नाह यामिति । तां प्रसिद्धां वैष्णवीं विष्णुसम्बन्धिनीं तनुं धामेत्यर्थः । सनातनं सनस्य ब्रह्मणः आतनः तत्तत्कार्ये नियोगो यत्र तदाकाशमाकाशवद्विस्तीर्णं यत्स्वकां तनुं साकेतमित्यर्थः यां व्यक्तिमिच्छसि प्रवेशयितुमिति शेषः तां प्रविश प्रवेशय । अत्र तिलककारः—वैष्णवीमिति, विष्णुसम्बन्धिनीं तनुं यद्वा सनातनमाकाशं ब्रह्मरूपं वा प्रविश, तद्रूपेण वा तिष्ठेत्यर्थः । आकाश शब्दो हि ब्रह्मणि तत्र तत्र श्रुतिषु प्रसिद्धः । अत्र गोविन्दराजः व्याचष्टे स्वकां तनुमिति । त्वं विष्णुं तनुं तद्वाकाशं सनातनम्, 'ऋचो अक्षरे परमे व्योमन्' इति श्रुत्युक्त परमाकाशं विष्णवतारकुलस्थानं वैकुण्ठं वा प्रविशेत्यर्थः । ननु दिव्यलोकप्रवेशनाधिकारः तवैवास्त्वित्याह—त्वमिति । लोकानां निखिल जीवानां गतिः निर्वाहकः त्वमेव,त्वां तु मायां कृपामयीं तव पूर्व-

परिग्रहाम् नित्यस्त्रियं सीतामृते विना केचिन्न प्रजानते अतएव त्वामचिन्त्यत्वादिविशिष्टमाहुर्वेदा इति शिरोमणिकारः।

अत्र तिलककारः प्राह—परंब्रह्म पितामहः स्तौति–त्वं हीति। लोक गतिः लोकानां स्वर्गादिकं गमयिता, लोकैर्गम्यश्च त्वमेवेत्यर्थः। त्वां केचिदतिशयित तपः सम्पन्ना अपि न प्रजानते। तर्हि किमज्ञेय सर्वथा नेत्याह-ऋते इति। मायां ज्ञानशक्तिरूपां विनान्ये न जानन्तीत्यर्थः। विशालाक्षीमित्यनेन तस्याः सर्वविषयता सूचिता। पूर्वपरिग्रहाम् तेन सहजत्वं सूचितम्। श्रवणमनननिदिध्यासनादिनेदृशी ज्ञानशक्तिर्येषां प्रादुर्भवति त एव त्वां जानन्तीति तात्पर्यम्। तत्र तादृशज्ञानविषयं स्वरूपमाह त्वामिति। अचिन्त्यं देशतः परिच्छेदशून्यं अतएव महद्भुतं प्राप्तम्। अविशेषात् सर्ववस्तुभिरिति शेषः, तेन वस्तु परिच्छेदशून्यं अक्षयं कालपरिच्छेदशून्यं, अजरमविकारिणम्। श्रीगोविन्दराजेनोक्तम्—त्वं हीत्यादिना। मायां लक्ष्मीं, पूर्वपरिग्रहाम् अनादितया परिगृह्यमाणां नित्यानपायिनीमित्यर्थः। त्वामिति,सर्वसङ्ग्रहं सर्वानुग्राहकम्। पितामहः वचः श्रुत्वा श्रीरामः सशरीरः सहानुजः वैष्णवं तेजः विवेश। वैष्णवं विष्णुसम्बन्धितेजः तन्मयवैकुण्ठमित्यर्थः। सहानुज इत्यनेनानुजशरीराणामपि तथैव तेजोमयत्वं सूचितम्। सशरीरशब्दबोधित स्वसाहचर्येण तेषामपि सशरीरप्रवेशबोधनात्। यत्तु गोविन्दराजः भ्रातृभिस्सह देवाभैः प्रविशस्व स्विकां तनुमिमं श्लोकं व्याचख्यौ—यत् श्रीरामः विष्णुतनुं स्वीचकार। श्रीलक्ष्मणः शेषतनुं, श्रीभरतो गरुड़तनुं, श्रीशत्रुघ्नो विष्वक्सेन तनुं स्वीचक्रुरिति व्याख्यानं मूलश्लोकं न स्पृशति।

'विवेश वैष्णवं तेजः सशरीरः सहानुजः' इति मूलमहर्षि वाल्मीकि-वचनमेवात्र अनुसन्धेयम् । प्रमाणपरतन्त्रैः सुधीधौरेयैः वैष्णवं तेजः विष्णुसम्बन्धि किमपि ज्योतिर्मयं धाम उच्यते । अथर्वणे अयोध्या ज्योतिर्मयी वर्णिता यथा—

'अष्टचक्रा नवद्वारा देवानां पूरयोध्या ।
तस्यां हिरण्मयः कोशः स्वर्गो ज्योतिषावृतः ॥

तथा च याऽयोध्या पूः सा सर्ववैकुण्ठानामेव मूलाधारा, मूल-प्रकृतेः परा, तत्सद् ब्रह्ममया, वीर्योत्तरा, दिव्यरत्नकोषा, तस्यां नित्यमेव सीतारामयोः विहारस्थलमस्तीति । तस्मिन्परमधाम्नि श्रीरामः सशरीरः सहानुजः विवेश जगाम । अत्र श्रीरामः सशरीरः सच्चिदानन्द दिव्यमंगलमय विग्रहेण सह परमधाम प्रविवेश । यदि श्रीरामस्य शरीरं मायिकं प्राकृतं स्यात्तदा तच्छरीरं त्यक्त्वैव श्रीरामः स्वधाम प्रविशेत् किन्तु श्रीरामस्तु सशरीरः परमधाम प्रविवेश । सहानुजः इत्यनेन श्रीभरत लक्ष्मण शत्रुघ्नाः भ्रातरः गृह्यन्ते । भ्रातरोऽपि सशरीराः परमधाम प्रवि-विशुः । भगवद्दिव्यमंगलमय विग्रहवत् भ्रातॄणामपि शरीराणि चिन्मयानीति वेदितव्यानि । नवमेऽपि— 'स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा । कोसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः ।' पुराणकल्पात् रामायणकल्पो ज्यायानिति पूर्वमेव प्रतिपादितम् । 'इतिहासपुराणाभ्यां वेदं समुप-बृंहयेत्' इति व्यासवचनेऽपि पुराणापेक्षया इतिहासस्याऽभ्यर्हि-तत्त्वं सर्वैरभ्युपगतम् ।

अथ श्रीरामः पितामहमुवाच—एषां जनौघानां त्वं लोकं दातुमर्हसि । आतिवाहिकतया दातुमर्हसीत्यर्थः । 'आतिवाहि-

कास्तल्लिङ्गादिति' ब्रह्मसूत्रे भगवता व्यासेन प्रकरणमिदं सविस्तरं व्याख्यातम्। कथं ब्रह्मविद्यारहितानामेषां ब्रह्मलोकप्राप्तिरित्यत्राह– 'इमे हि सर्वे स्नेहान्मामनुजाता मनस्विनः। भक्ता हि भजितव्याश्च त्यक्तात्मानश्च मत्कृते ॥' भक्ताः–भक्तिमन्तः, मत्कृते त्यक्तात्मानश्च। एतेन ब्रह्मविद्यारहितानामेषां कथं ब्रह्मलोकप्राप्तिरिति शङ्का दूरोत्सारिता। यतो हि ब्रह्मविद्यायाः फलभूता भगवद्भक्तिरिति। ब्रह्मविद्याफलं मोक्षमपि भक्तिरसिकाः नाङ्गीकुर्वन्तीति श्रीमद्भागवते सर्वत्र वर्णितम्। भगवद्वचनं श्रुत्वा ब्रह्मा प्रोवाच– 'लोकान् सान्तानिकान्नाम यास्यन्तीमे समागताः' सान्तानिकान्–सान्तानिकाख्यान् लोकान् सम्प्राप्ताः सन्तः त्वल्लोकं सर्वे भक्ता यास्यन्तीति। यच्च तिर्यग्गतं किंचित्त्वामेवमनुचिन्तयत्। प्राणांस्त्यक्ष्यति भक्त्या वै तत्सन्ताने निवत्स्यति। न केवलमेते भक्ता एव त्वल्लोकं यास्यन्ति किन्तु इतः परमपि ये रामभक्तास्तेऽपि विष्णुलोकं प्राप्स्यन्ति। 'सर्वैर्ब्रह्मगुणैर्युक्ते ब्रह्मलोकादनन्तरे' ब्रह्मलोकादनन्तरे अव्यवहितोपरि देशस्थे सर्वैर्गुणैर्नित्ययुक्तैस्सान्तानिके निवत्स्यन्तीति श्रीगोविन्दराजः। अत्र शिरोमणिकारः तिर्यग्गतमपि यत्किंचित्त्वामनुचिन्तयत् सत् प्राणांस्त्यक्ष्यति तत्सर्वं ब्रह्मगुणैः सत्यज्ञानानन्दादिभिर्युक्ते ब्रह्मलोकाद् गोलोकादित्यर्थः। अनन्तर समीपवर्ति साकेते विद्यमानेषु सन्तानेषु लोकविशेषेषु निवत्स्यति।

तिलककारोऽप्याह–कोऽसौ सान्तानिकलोकस्तत्राह–सर्वैरिति। सर्वैर्ब्रह्मगुणैः सत्यसङ्कल्पत्वादि ब्रह्मगुणैर्युक्ते ब्रह्मलोकादनन्तरे तत्समीपस्थे। अनेन तत्र स्थितानामपि क्रमेण

ब्रह्मलोकप्राप्त्या ब्रह्मणा सह मुक्तिः सूचिता। देवेश ब्रह्मणि तथा ब्रुवति सति हर्षपूर्णाश्रुविक्लवाः सहागतभिन्ना अपि जनाः गोप्रतारमुपागतास्सन्तः सरयूं भेजिरे। गोप्रतारं गोप्रताराख्यं तीर्थमिति। सहानागतानां वृत्तमाह–अवगाह्येति सरयूजलेषु यो योऽवगाह्यात्तिष्ठत् स प्रहृष्टवद् प्रहर्षविशिष्टं यथा भवति तथा प्राणांस्त्यक्त्वा मानुषं देहं चोत्सृज्य विमानमध्यरोहत। स्थावराणि च चराणि सरयूतोयं गत्वा तत्तोय विक्लेदं प्राप्य तत्तोय मज्जनं, सेचनञ्च प्राप्य देवलोकं साकेतलोकमुपागमन्।

'ततः समागतान् सर्वान् स्थाप्य लोक गुरुर्दिवि।
जगाम त्रिदशैः सार्धं सदा हृष्टैर्दिवं महत्॥'

दिवं परमाकाशं वैकुण्ठं त्रिदशैर्नित्यसूरिभिः सदा हृष्टैरिति विशेषणात्। य उत्तराननयत्कोसलान्दिवमित्यनेन श्रीरामायण-प्रतिपादित समस्तकोसलदेशवासिप्रजाजनपरमधामप्रदानप्रसङ्ग-स्यैकवक्यता सूचिता।

कियन्तः साम्प्रतिकाः कामिलबुल्के प्रभृतयो विद्वांसः संशेरते यद्रामायणस्य बालकाण्डोत्तरकाण्डद्वयमपि प्रक्षिप्तमिति। तदप्यनेन 'य उत्तराननयत्कोसलान्दिवमिति'वचनेन तेषां संशयः निर्मूलः प्रतिभाति। युद्धकाण्डस्य समापनावसरे श्रीरामायणस्य फलश्रुतिर्वर्णिता अतः रामायणस्य समाप्तिर्युद्धकाण्डे समुचितेति तेषामाशयः। वस्तुतस्तु विशिष्टप्रसंगस्य समापनावसरे फलश्रुति-वर्णनं क्रियते महर्षिभिः। बालकाण्डस्य प्रथमसर्गे मूलरामायण-समापनावसरेऽपि फलश्रुतिर्वर्णिता यथा-'पठन् द्विजो वागृषभत्व-मीयादिति'। स्कन्दपुराणे केवलकिष्किन्धाकाण्डकथायामेव

नानाफलश्रुतयः दृश्यन्ते । 'मारुतिप्रेषणं श्रुत्वा सद्गुरू लभते नरः । राममारुतिसम्वाद श्रवणाद्राज्यमाप्नुयात् ॥ रामसुग्रीव संल्लापं श्रुत्वा दुःखाद्विमुच्यते । विद्याबलं दैवबलं ज्ञानबन्धुबलं तथा । सेनाबलं भवेत्तस्य वालिनो बलकीर्तनात् । गिरीणां भेदनञ्चैव किष्किन्धागमनं तथा । वालिसुग्रीवयोर्युद्धं श्रुत्वा विजयपूर्वकम् । युद्धे विजयमाप्नोति बालिनो विजयं यथा । ताराप्रलापमाकर्ण्य बालिनो निधनं तथा । कपीन्द्र संस्कृतिं नारी श्रुत्वा ह्यविधवा भवेत्॥ दीर्घायुष्यं भवेद्भर्तुः पुत्रिणी संभविष्यति। अभिषेकश्च ताराया रूमायाः प्राप्तिमुत्तमाम् । सुग्रीवस्य तदा श्रुत्वा राज्यलाभं स गच्छति। इत्यादि । अत्र मारुतिप्रेषणमारभ्य सुग्रीवराज्यलाभपर्यन्तचरितस्य फलश्रुतिरुपलभ्यते स्कान्दे । एवमेव युद्धकाण्डे रावणवधो जातः श्रीरामराज्याभिषेकश्च समजनि 'पौलस्त्यवधमित्येव चकार चरितव्रतः' इति श्रीरामायणस्य नामकरण समये पौलस्त्यवधोऽप्येकं नाम कृतं महर्षिणा। अतः रावणवधानन्तरं फलश्रुतिवर्णनमुचितमेव । श्रीरामराज्याभिषेकप्रसङ्गस्तु महामङ्गलप्रदायकः प्रसङ्ग आसीदतः राज्याभिषेकानन्तरं फलश्रुतिवर्णनमपि युक्तियुक्तमेव । वस्तुतस्तु युद्धकाण्डवर्णित फलश्रुतिः राज्याभिषेक फलश्रुतिरवगन्तव्या ।

रामायणमिदं कृत्स्नमिति वचनेनापि युद्धकाण्डे रामायणस्य समाप्तिं वक्तुं न शक्यते'षट्काण्डानि तथोत्तरमिति'महर्षिवचनेन श्रीरामायणं सप्तकाण्डात्मकं प्रथितचरम् । नागेशभट्ट गोविन्दराज शिरोमणिकार तीर्थ प्रभृतिभिर्व्याख्यातृभिः सप्तकाण्डात्मकं रामायणं स्वीकृतं व्याख्यातञ्च । श्रीमद्रामानुजाचार्येण

श्रीशैलपूर्णस्वामिनः सकाशादष्टादशवारं श्रीमद्रामायणमधीतवान् । श्रीशैलपूर्णस्वामिना तस्मै अष्टादशार्था उपदिष्टाः । श्रीगोविन्दराजेन बालकाण्डे मङ्गलमाचरता प्रोक्तम्—'सुस्पष्टमष्टादशकृत्व एत्य श्रीशैलपूर्णाद्यतिशेखरोऽयम् । शुश्राव रामायणसम्प्रदायं वक्ष्ये तमाचार्यपरम्परात्तम् ॥' किं पदवाक्यप्रमाणपारावारपारीणो गोविन्दराज भ्रान्त आसीत् ? किं वैयाकरणधौरेयाः नागेशभट्टमहाभागाः भ्रान्ता आसन् ? कतकशिरोमणिकारतीर्थ प्रभृतयो व्याख्यातार भ्रान्ता आसन् ? इमे सर्वे व्याख्यातारः ऋतम्भराप्रज्ञासम्पन्नाः श्रोत्रियाः ब्रह्मनिष्ठाः आसन्निति तेषां व्याख्यानानुशीलनेनैव सुधियो विभायन्तु यदिमे व्याख्यातारो महानुभावाः प्रमाणिकाः आहोस्वित् याकोबी कामिलबुल्के प्रभृतयः वैदेशिकाः विद्वांसः प्रमाणिकाः इति ।

यद्युत्तरकाण्डं प्रक्षिप्तं स्यात्तदा श्रीमद्भागवतपद्मस्कन्दादिपुराणेषु श्रीरामपरमधाममगनचरितं कथमुपलभ्यते ? किञ्च यद्युत्तरकाण्डं प्रक्षिप्तं स्यात्तदा लवकुशयोर्जन्मादि न सिद्ध्येत्, एवञ्च बालकाण्डस्य चतुर्थसर्गे कुशीलवाभ्यां गीयमानं श्रीरामचरितमप्यलीकं स्यात् । ततश्च समग्रं श्रीरामायणमेव लुप्तं स्यात् । किञ्चोत्तरकाण्डे वर्णितं श्रीहनुमच्चरितमपि प्रक्षिप्तं स्यात् । बालकाण्डं यदि प्रक्षिप्तं स्यात्तदा भगवदवतारविश्वामित्रयज्ञरक्षण ताटकाताटकेयवधाहल्योद्धारशैवधनुर्भंग श्रीसीतापरिणयपरशुरामपराजयादि चरितमन्तरा शेषकाण्डकथापि न सेत्स्यति । किं श्रीसीतापरिणयं विना श्रीरामायणस्य पूर्तिस्स्यात्?

किं श्रीसीतां विना श्रीरामो वनं गच्छेत्? आरण्यकाण्डे श्रीसीताहरणमन्तरा रावणवधस्स्यात् ?

श्रीउर्मिलादीनां नामानि—अयोध्याकाण्डे न सन्तीति बालकाण्डं प्रक्षिप्तं तदा बुल्केसमर्थित पञ्चकाण्डमपि प्रक्षिप्तं स्यात्—यतो हि शेषकाण्डेष्वपि तानि नामान्यनुपलब्धानि ।

शूर्पणखां प्रति श्रीरामस्य परिहासवचनमपि बुल्के महोदयेनाक्षिप्तम्, तथा श्रीलक्ष्मणविषये 'श्रीमानकृतदारश्च' इति श्रीरामवचनस्यान्यार्थं चकार । अकृतदारः असहकृतदार इत्यर्थः । सर्वैरपि व्याख्यातृभिरयमेवार्थः कृतः ।

बुल्के महोदयस्य पुस्तके मुख्यरूपेणावतारवादस्य विरोधो दृश्यते । बालोत्तरकाण्डप्रक्षिप्तकथनेनापि तेनालोचितं यत् अवतारवादस्य प्रबलं प्रतिपादनं युद्धकाण्डे वर्तते । तत्रापि मन्दोदरी श्रीरामस्यासाधारणमैश्वर्यं प्रतिपादितवती । ब्रह्मस्तवे श्रीरामस्य भगवत्त्वमनितरसाधारणं वर्णितम् । युद्धकाण्डमपि प्रक्षिप्तमिति वक्तुं नाशकत्तदा—अवतारवादसमर्थका श्लोकाः प्रक्षिप्ताः वर्णिताः ।

तेन स्वीकृतं यदिमे श्लोकाः सर्वेषु पाठेषु मिलन्ति तदा प्रक्षिप्त कथने किं मानम्? यदि—अवतारवादसमर्थकाः श्लोकाः प्रक्षिप्तास्तदा सर्वैरपि व्याख्यातृभिः कथं ते व्याख्याताः ? बालकाण्डे परशुरामवचनं 'अक्षयं मधुहन्तारं जानामि त्वां सुरोत्तमम् ।' अयोध्याकाण्डे—स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः इत्यादि अवतार-

बोधकं श्लोकद्वयमेवाप्तम् तेन, एकं बालकाण्डे तथैकमयोध्या-काण्डे। अयोध्याकाण्डे श्रीसुमित्रावचनं तेन नाधीनं न श्रुतम् यत्र श्रीरामः पुरुषोत्तमस्तथा सूर्यस्य सूर्यः, अग्नेरग्निः, प्रभोः प्रभुः श्रियः श्रीस्तथा दैवतानां दैवतरूपेण वर्णितः—

'तवार्ये सद्गुणैर्युक्तः स पुत्रः पुरुषोत्तमः।' वा० २।४४।२
सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः।
श्रियः श्रीश्च भवेदग्र्या कीर्तिः कीर्त्याः क्षमाक्षमा।
दैवतं दैवतानां च भूतानां भूतसत्तमः। २।४४।१५–१६,

विश्वामित्रेणापि श्रीरामस्यावतारस्वरूपं न ज्ञातवानिति तस्य मतम् किन्तु 'अहं वेद्मि महात्मानं रामं सत्यपराक्रमम्। वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः।' इत्यस्मिन् श्लोके सुस्पष्टं यत्तेनावतारस्वरूपं सम्यग् ज्ञातम्।

यदा युद्धकाण्डे श्रीरामः ब्रह्माणमुवाच— आत्मानं मानुषं मन्ये रामं दशरथात्मजम्। योऽहं यस्य यतश्चाहं भगवांस्तद् ब्रवीतु मे।' श्लोकस्यास्योपयोगस्तेन कृतः किन्तु ब्रह्मणा यदुत्त-रितं तस्योपयोगस्तेन न कृतः यतोहि— अवतारवादस्य सम्यक् निरूपणं तत्रोपलभ्यते— 'भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुरित्यारभ्य 'ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः।' पर्यन्तमेकविंशति श्लोकैः लोकपितामहः श्रीरामस्यासाधारणं परत्वं प्राचीकशदिति तेन न चर्चितमिति महदाश्चर्यम्।

बुल्के महोदयेन महता प्रयासेन पुस्तकं लिखितम्। तस्य पुस्तकस्येदमेव तात्पर्यं यद् श्रीरामो भगवान्नास्ति। यद्यपि स्वसम्प्रदायस्य मुखोल्लासार्थमेव तेन एष प्रयासो विहितः किन्तु साम्प्रतमपि सर्वे जनाः श्रीरामं भगवन्तं मन्यन्ते इति तस्य चेतः नूनं चेखिद्येत। तस्य पुस्तकमधिजिगांसूनां हृदयेष्वपि भगवान् श्रीरामः अवताररूपेण सदा उदेष्यतीति मामकीनः समयः। यद्यपि श्रीहनुमदुपदेशे तस्य पुस्तकस्य सम्यक् समीक्षा मया न कृता किन्तु क्षिप्रमेव पृथक् स्वतन्त्रप्रबन्धेन समीक्षां चिकीर्षामि। इत्थमल्पीयसा प्रबन्धेन श्रीमद्भागवतवर्णितस्य श्रीरामचरितस्य रसास्वादनं मया कृतम्। यदि श्रीरामभक्तिरसिका प्रबन्धमिममादरिष्यन्ति तदा सौभाग्यं मंस्यते वस्तुतस्तु श्रीसीतारामचरणस्मरणानन्दसिद्ध्यर्थमेव प्रबन्धोऽयं मया व्याख्यातः।

'श्रीसीतारामचरणस्मरणानन्दसिद्धये। सीतारामशरणेन सदुच्छिष्टं सुरस्यते।' इति मङ्गलाचरणे मया निवेदितम्। सतामुच्छिष्टसेवनेन भजनानन्दसिद्धिर्भवतीति श्रीवैष्णवसम्प्रदायाचारः प्रथितचरः अतः श्रीपराशरभट्ट श्रीलोकाचार्य श्रीवरवरमुनि श्रीकूरेशस्वामि श्रीवत्साङ्कमिश्र श्रीरङ्गनाथमुनि प्रभृतीनां दाक्षिणात्याचार्याणां वचनान्यत्र सङ्गृहीतानि। श्रीधरस्वामिश्रीवीरराघव श्रीजीवगोस्वामि श्रीविश्वनाथचक्रवर्ति प्रभृतीनां व्याख्यातृणां वचनान्यपि रसितानीति तेषां पादपद्मेषु प्रणतयो निवेद्यन्ते। श्रीहर्य्याचार्य श्रीहरिदासस्वामि प्रभृतीनामाचार्याणां सूक्तिभिः प्रबन्धोऽयं विभूषित इति तेषामुपकारं शिरसा वहामः।